अत्रापि पिण्डस्थादिवद्भेदचातूरूप्यमस्तीत्याह

**उदासीनस्य तस्यापि वेद्यं येन चतुर्विधम् ।**
**भूतादि तदुपाध्युत्थमत्र भेदचतुष्टयम् ॥२६३॥**
**उदितं विपुलं शान्तं सुप्रसन्नमथापरम् ।**

वेद्यादिक्षोभशून्यस्यापि प्रमातुर्भूततत्त्वादि वेद्यं येन वक्ष्यमाणोदितत्वादि-भेदाच्चतुर्विधं, तेनापि उपाधिबलायातमुदितत्वादिभेदचतुष्टयमेवेति वाक्यार्थः । उदितमिति संस्कारमात्रात्मनावस्थानात् । विपुलमिति तथैव प्ररोहात् । शान्तमिति प्रलीनसंस्कारत्वात् । सुप्रसन्नमिति उद्भवदहंभावर-सौन्मुख्यात् । तदुक्तम्

'चतुर्धा रूपसंस्थं तु ज्ञातव्यं योगचिन्तकैः ।
उदितं विपुलं शान्तं सुप्रसन्नमथापरम् ॥' ( मा० वि० २।४४ )

इति ॥ २६३ ॥

इदानीं क्रमप्राप्तं तुर्यं लक्षयति

**यत्तु प्रमात्मकं रूपं प्रमातुरुपरि स्थितम् ॥२६४॥**
**पूर्णतागमनौन्मुख्यमौदासीन्यात्परिच्युतिः ।**
**तत्तुर्यमुच्यते शक्तिसमावेशो ह्यसौ मतः ॥२६५॥**

प्रमातुरिति मितस्य, पूर्णस्य हि चतस्रोऽपि विधाः स्वातन्त्र्यविजृम्भा-मात्रमित्यभिप्रायः । उपरिस्थितत्वमेव दर्शयति पूर्णतागमनौन्मुख्यमौदासी-न्यात्परिच्युतिरिति । ननु कथंकारं नाम तुर्यदशायामौदासीन्यन्यग्भाव-मात्रात्स्वरूपताग्रहोन्मुखीभावो भवेदित्याशङ्क्याह 'शक्तिसमावेशो ह्यसौ मतः' इति परामर्शरूपायां हि शक्तौ समावेशस्तत्प्राधान्यमेवेत्यर्थः ॥ २६५ ॥

नन्विदं पूर्णतागमनं प्रत्यौन्मुख्यं नाम किं पूर्णं रूपमुतापूर्णं, तत्रापूर्णं चेज्जाग्रदादय एव, पूर्णं चेत्तुर्यातीतमेवेत्यन्तरा किमिदं तुर्यं नामेत्या-शङ्क्याह

**सा संवित्स्वप्रकाशा तु कैश्चिदुक्ता प्रमेयतः ।**
**मानान्मातुश्च भिन्नैव तदर्थं त्रितयं यतः ॥२६६॥**

सा तुर्यरूपा संवित्कैश्चित्स्वप्रकाशत्वात्प्रमेयादिभ्यो व्यतिरिक्तैवोक्तेति वाक्यार्थः, अन्यथा ह्यस्याः परप्रकाशवादे प्रकाशत्वेन च प्रमाणादपरोक्ष-संविद्वादे च तथाविधादेव प्रमातुर्भेदो न सिद्धयेत् । ननु स्वप्रकाशत्वमप्यस्याः कुतस्त्यमित्याशङ्क्योक्तं 'तदर्थं त्रितयं यतः' इति । यतस्तज्जाग्रदादित्रयं तस्यां संविद्येवार्थोऽर्थनात्मिका याच्ञाकाङ्क्षा यस्य तत्संविद्विश्रान्त्युन्मुख-मित्यर्थः । अन्यथा हि जाग्रदादिविश्रान्तिरूपायास्तस्या अपि विश्रान्त्यन्तरो-न्मुखत्वेऽनवस्था भवेदिति भावः ॥ २६६ ॥

कथं चास्यामेते विश्राम्यन्तीत्याशङ्क्याह

**मेयं माने मातरि तत् सोऽपि तस्यां मितौ स्फुटम् ।**
**विश्राम्यतीति सैवैषा देवी विश्वैकजीवितम् ॥२६७॥**

देवीति स्वप्रकाशत्वाद्द्योतमानेत्यर्थः । विश्वैकजीवितमिति प्रमेयादेः सर्वस्यैवात्र विश्रमात् । यदुक्तम्

'वेद्यं वेदकतामात्तं वेदकः संविदात्मताम् ।
संवित्त्वदात्मा चेत्सत्यं तेनेदं त्वन्मयं जगत् ॥'

इति ॥ २६७ ॥

नन्वियं प्रमाणफलरूपा मेयादित्रयसाध्यामितिरतो मेयादयोऽस्या जीवितं नतु सा तेषामिति किमेतदुक्तमित्याशङ्क्याह

**रूपं दृशाहमित्यंशत्रयमुत्तीर्य वर्तते ।**
**द्वारमात्राश्रितोपाया पश्यामीत्यनुपायिका ॥२६८॥**
**प्रमातृता स्वतन्त्रत्वरूपा सेयं प्रकाशते ।**
**संवित्तुरीयरूपैवं प्रकाशात्मा स्वयं च सा ॥२६९॥**

रूपमिति प्रमेयम्, दृशेति प्रमाणम्, अहमिति प्रमाता, सेयं विश्वैक-जीवितं शुद्धा परा संविदेवमंशत्रयोत्तीर्णा पश्यामीत्येवमाकारं बहिष्प्रसरणा-नन्तरं प्रत्यावृत्य स्वात्मविश्रान्तौ यद्द्वारं तावत्येवाश्रितो मेयादित्रयलक्षण उपायो यया सा, स्वरूपे पुनरनुपयुज्यमानानुपपद्यमानोपाया, स्वातन्त्र्यमयी परप्रमातृता सेति वाक्यार्थः । ननु कर्मकरणकर्तृव्यतिरिक्तं फलदशाधिशायि तुरीयं रूपं प्रकाशं पश्यामो न तु तदतिरिक्ता काचन संवित्परिस्फुरति यस्याः

पश्यामिति द्वारमुच्येतेत्याशङ्क्याह 'प्रकाशते' इति। चो हेतौ। सा हि परप्रमातृरूपा शुद्धा संवित्स्वयं प्रकाशते न तु पश्यामीत्यादिविकल्पोल्लेख-भूमिरित्यर्थः। यतस्तुरीयाभिमतस्य पश्यामीति प्रकाशस्य सैवात्मा तस्यां हि क्षणमप्यप्रकाशमानायां न किंचिदेव परिस्फुरेत् ॥ २६९ ॥

अत एवाह

**तत्सावेशतादात्म्ये मातृत्वं भवति स्फुटम् ।**
**तत्समावेशोपरागान्मानत्वं मेयता पुनः ॥२७०॥**
**तत्समावेशनैकट्यात्त्रयं तत्तदनुग्रहात् ।**

प्रमात्रादीनां हि तुर्यसंविदमपेक्ष्य यथायथं विप्रकर्षः,—इत्युक्तं 'तत्समा-वेशतादात्म्ये' इति, तत्समावेशोपरागादिति, तत्समावेशनैकट्यादिति च ॥ २७० ॥

प्रमाणफलविलक्षणसंविद्वाद एव चागमप्रसिद्धिरनुगतेत्याह

**वेद्यादिभेदगलनादुक्ता सेयमनामया ॥२७१॥**
**मात्राद्यनुग्रहादा(धा)नात्सव्यापारेति भण्यते ।**

उक्तेति इहैव समनन्तरम्। 'अनामया सव्यापारा च भण्यते' इति श्रीपूर्वशास्त्रे यददूर एव संवादयिष्यति ॥ २७१ ॥

एतदेव स्वदर्शनभङ्ग्यापि योजयति

**जाग्रदाद्यपि देवस्य शक्तित्वेन व्यवस्थितम् ॥२७२॥**
**अपरं परापरं च द्विधा तत्सा परा त्वियम् ।**

ततश्च तज्जाग्रदादित्रयमेव द्विधा पारमेश्वरी शक्तिरित्युक्तं द्विधा तत्सेति। सेति शक्तिः, इयं तु तुर्यात्मा संवित्परा तेन जाग्रत्स्वप्नावपरा, सुषुप्तं परापरा, तुर्यं च परेति ॥ २७२॥

अत्रापि प्राग्वदेव संज्ञाभेदोऽस्तीत्याह

**रूपकत्वादुदासीनाच्च्युतेयं पूर्णतोन्मुखी ॥२७३॥**
**दशा तस्यां समापत्तौ रूपातीतं तु योगिनः ।**
**पूर्णतौन्मुख्ययोगित्वाद्विश्वं पश्यति तन्मयः ॥२७४॥**

**प्रसंख्याता प्रचयतस्तेनेयं प्रचयो मता ।**

पूर्णतौन्मुख्यादुदासीनाद्रूपकत्वात्प्रमातृत्वात् च्युतायामस्यां तुर्यदशायां योगिषु समापत्तिर्नाम रूपं मितमपि मातारमतिक्रान्तत्वाद्रूपातीतमित्युच्यते । 'प्रचयत' इति राशीभूतत्वेन अत एव 'तन्मय' इत्युक्तं विश्वस्य करामलकवत्प्रचिततया दर्शनेन हेतुनेत्यर्थः । तदुक्तम्

'प्रचयो रूपातीतं च सम्यक्तुर्यमुदाहृतम् ।' ( मा० वि० २।३८ )

इति ॥ २७४ ॥

नन्वस्यामपि परस्परसांकर्याज्जाग्रदादिवच्चातूरूप्यं किं संभवेन्न वेत्याशङ्क्याह

**नैतस्यामपरा तुर्यदशा संभाव्यते किल ॥२७५॥**
**संविन्न किल वेद्या सा वित्त्वेनैव हि भासते ।**

तुर्यं हि परा संवित् सा च वेदित्रेकस्वभावेति वेद्यदशासंस्पर्शोऽप्यस्या न स्यात्तत्कथमियं वेद्यवेदकोभयरूपतामश्नुवीत येनोभयदशाधिशायि तुर्यंतुर्यमपि स्यात् ॥ २७५ ॥

ननु यद्येवं तर्हि तुर्यंजाग्रदाद्यपि किं संभवेन्नवेत्याशङ्क्याह

**जाग्रदाद्यास्तु संभाव्यास्तिस्रोऽस्याः प्राग्दशा यतः ।२७६।**
**त्रितयानुग्रहात्सेयं तेनोक्ता त्रिकशासने ।**
**मनोन्मनमनन्तं च सर्वार्थमिति भेदतः ।।२७७।।**

'संभाव्या'इति जाग्रदादयो हि परस्या एव संविदः स्वातन्त्र्यविजृम्भितम्, अत एवाह यतस्त्रितयानुग्रहात्सेयमिति । अत एव जाग्रदाद्यानुगुण्येन श्रीपूर्वशास्त्रे त्रिप्रकारतयेयमुक्तेत्याह तेनेत्यादि । तेनेति जाग्रदाद्यवस्थात्रयानुग्राहकत्वेन । मनोन्मनमिति जागरायामविकल्पकप्राधान्यान्मनसो मननरूपस्वव्यापारोत्क्रमणेन वृत्तेः । अनन्तमिति स्वप्ने विषयेन्द्रियाद्यनपेक्षणेन देशकालाद्यनियमात् । सर्वार्थमिति सुषुप्ते विश्वस्य शक्त्यात्मनावस्थानात् ॥ २७७ ॥

एवं तुर्यमभिधाय तुर्यातीतमप्यभिधत्ते

**यत्तु पूर्णानवच्छिन्नवपुरानन्दनिर्भरम् ।**

**तुर्यातीतं तु तत्प्राहुस्तदेव परमं पदम् ॥२७८॥**

ननु तुर्यातीतं नाम पञ्चमं पदं किमतोऽप्यन्यत्पदमस्ति नवा,—इत्याशङ्क्योक्तं तदेव परमं पदमिति। परममित्यनन्याकाङ्क्षं परविश्रान्तिधामत्वात्, अत एवोक्तं पूर्णानवच्छिन्नवपुरिति, आनन्दनिर्भरमिति च ॥ २७८ ॥

ननु लोकयोगप्रसंख्यानवशाद्यथा जाग्रदादीनां चतसृणामप्यवस्थानां त्रीणि नामान्युक्तानि, तद्विदिहापि किमुच्यन्ते नवेत्याशङ्क्याह

**नात्र योगस्य सद्भावो भावनादेरभावतः।**
**अप्रमेयेऽपरिच्छिन्ने स्वतन्त्रे भाव्यता कुतः ॥२७९॥**
**योगाद्यभावतस्तेन नामास्मिन्नादिशद्विभुः।**

तेनेति योगादेरसद्भावेन। यथा चैतत्तथा द्वितीयाह्निकादावुक्तम् ।२७९।

अतश्चात्र संविदेकरूपत्वात्प्रसंख्यानमेव प्रपततीति तदभिप्रायेणैव नामास्तीत्याह

**प्रसंख्यानबलात्त्वेतद्रूपं पूर्णत्वयोगतः ॥२८०॥**
**अनुत्तरादिह प्रोक्तं महाप्रचयसंज्ञितम्।**

एतद्रूपमित्येतच्छब्देन तुर्यातीतपरामर्शः। ननु तुर्ये 'प्रचय'इति संज्ञानमुक्तमिह तु ततोऽपि महत्त्वे किं निमित्तमित्याशङ्क्योक्तम् 'अनुत्तरात्' इति 'पूर्णत्वयोगत' इति। अनुत्तरादिति तुर्यात्। तत्र हि संविदो विश्वोत्तीर्णमेव रूपमिह तु तथात्वेऽपि विश्वमयमिति ततोऽप्यस्य महत्त्वयोगः। तदुक्तम्

'महाप्रचयमिच्छन्ति तुर्यातीतं विचक्षणाः।' ( मा० वि० २।३८ )

इति ॥ २८० ॥

अत एवात्र प्रचय इव भेदसंभावनापि नास्तीति न कश्चिदपि विशेषकतया भेद उक्तः,—इत्याह

**पूर्णत्वादेव भेदानामस्यां संभावना न हि ॥२८१॥**
**तन्निरासाय नैतस्यां भेद उक्तो विशेषणम्।**

ननु पूर्वशास्त्रे

'मनोन्मनमनन्तं च सर्वार्थं सततोदितम् ।
प्रचये तत्र संज्ञेयमेकं तन्महसि स्थितम् ॥' ( मा० वि० २।४६ )

इत्यादिना महाप्रचयेऽपि सततोदिताख्यो भेद उक्तः,—इति कथमेतदवोचस्तुर्यातीतदशायां नोक्तो भेद इतीत्याशङ्क्याह

**सततोदितमित्येतत्सर्वव्यापित्वसूचकम् ॥२८२॥**

'सत्त्वं लघु प्रकाशकम् ।' ( सां० १३ का० )

इत्यादौ सत्त्वस्य लघुत्वादिना तथातथास्वरूपमेवोक्तं तथेहापि सततोदितत्वेन सर्वव्यापित्वलक्षणमखण्डस्वरूपमेव प्रकाशितमिति ॥ २८२ ॥

किमत्र प्रमाणमित्याशङ्क्याह

**न ह्येक एव भवति भेदः क्वचन कश्चन ।**

भेदा हि प्रतियोगिनमपेक्ष्य भेदका भवेयुरिति कथमेक एव भेदः स्यात् । स हि स्वरूपमेवोच्यते ॥

अतश्चात्रैको भेदः,—इत्येतन्मूढप्रलपितमित्याह

**तुर्यातीते भेद एकः सततोदित इत्ययम् ॥२८३॥**
**मूढवादस्तेन सिद्धमविभेदित्वमस्य तु ।**

अत एवागमोऽप्येवमित्याह

**श्रीपूर्वशास्त्रे तेनोक्तं**

तत्र पिण्डस्थस्य प्राक्संवादितत्वात्पदस्थात्प्रभृति तदेव पठति

**पदस्थमपरं विदुः ॥२८४॥**
**मन्त्रास्तत्पतयः सेशा रूपस्थमिति कीर्त्यते ।**
**रूपातीतं परा शक्तिः सव्यापाराप्यनामया ॥२८५॥**
**निष्प्रपञ्चो निराभासः शुद्धः स्वात्मन्यवस्थितः ।**
**सर्वातीतः शिवो ज्ञेयो यं विदित्वा विमुच्यते ॥२८६॥**

अपरमित्यधिष्ठानकरणं, सुषुप्ते च प्रमातुरेव प्राधान्यमित्युक्तं 'मन्त्रास्तत्पतयः सेशा' इति । शक्तिरिति संवित्, सैव हि तुर्यस्य रूपमित्युक्तं

प्राक्। 'निष्प्रपञ्च' इति अविभिन्नस्वभाव इत्यर्थः। अत एवोक्तं 'स्वात्मन्यवस्थित' इति 'निराभास' इति 'शुद्ध' इति च। 'सर्वातीत' इति सर्वं तुर्याद्यतीतः सर्वानप्यत्यर्थमितश्चेत्यर्थः॥ २८६॥

नन्विह 'श्रीशंभुनाथाज्ज्ञात्वा मयैतद्दर्श्यते' इति प्रागुक्तं तेन पुनः स्वोपज्ञमेव किमेतदुक्तं नन्वेत्याशङ्क्याह

**इति श्रीसुमतिप्रज्ञाचन्द्रिकाशान्ततामसः।**
**श्रीशंभुनाथः सद्भावं जाग्रदादौ न्यरूपयत्॥२८७॥**

श्रीसुमतिनाथो ह्यस्य परमगुरुर्यत्पारम्पर्यादनेनैतदधिगतम्॥ २८७॥

इदानीमेषामेव गुर्वन्तरमताभिप्रायेणापि स्वरूपं निरूपयितुमुपक्रमते

**अन्ये तु कथयन्त्येषां भङ्गीमन्यादृशीं श्रिताः।**
**यद्रूपं जाग्रदादीनां तदिदानीं निरूप्यते॥२८८॥**

अन्य इति श्रीप्रत्यभिज्ञाकारादयः॥ २८८॥

तदेवाह

**तत्राक्षवृत्तिमाश्रित्य बाह्याकारग्रहो हि यः।**
**तज्जाग्रत्स्फुटमासीनमनुबन्धि पुनः पुनः॥२८९॥**

**आत्मसंकल्पनिर्माणं स्वप्नो जाग्रद्विपर्ययः।**
**लयाकलस्य भोगोऽसौ मलकर्मवशान्न तु॥२९०॥**

**स्थिरीभवेन्निशाभावात्सुप्तं सौख्याद्यवेदने।**
**ज्ञानकलस्य मलतः केवलाद्भोगमात्रतः॥२९१॥**

यन्नाम बाह्यत्वात्सर्वप्रमातृसाधारणस्यार्थस्य सर्वाक्षगोचरतया ग्रहणं, तज्जाग्रज्जागरावस्थेत्यर्थः। तच्चार्थस्य बाह्यत्वादेव स्फुटमासीनं स्पष्टावभासतया तिष्ठत्, अत एव बाधानुदयात्पुनःपुनरनुबन्धि स्फुटं स्थिरार्थविषयमित्यर्थः। तदुक्तम्

'सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा।
सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः॥' (ई० प्र० ३।२।१७)

इति। स्वप्नस्य च जाग्रद्विपर्यये हेतुरात्मसंकल्पनिर्माणमिति। तत्र हि मनोमात्रविषयत्वादर्थस्य सर्वाक्षगोचरत्वं सर्वप्रमातृसाधारणत्वं पुनःपुनरनुबन्धित्वं च नेति। तदुक्तम्

'मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात्।
स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम्॥' (ई० प्र० ३।२।१६)

इति। यत्पुनरत्र स्पष्टावभासत्वमुक्तं तदपि सर्वाक्षगोचरत्वाद्यभावाज्जाग्रद्विपरीतमेवेति न कश्चिद्विरोधः। 'लयाकलस्य भोगोऽसौ' इति लयाकलोऽत्र भोक्तैवेत्यर्थः, अत एव जाग्रत्यपि सकलः प्रमातेत्यनेन सूचितम्। तदुक्तम्

'तत्र स्वरूपे ग्राह्यत्वं सकलो ग्राहको मतः।
ग्रहणाकारतामाप्ता शक्तिः सकलसंमता॥'

इति। ननु चात्र लयाकलस्य सकलवत्कस्मान्न भोगः। स्थिरत्वं यायादित्याशङ्क्याह नन्वित्यादि। अस्य ह्याणवकार्ममलद्वययोगाज्जातोऽपि भोगो मायीयमलाभावान्न प्ररोहमियाच्छरीरादेराश्रयस्यासंपत्तेः। तदुक्तम्

'प्रलयाकलसंज्ञो यस्तस्य कार्ममलस्थितेः।
स भोगो जायते मायाभावात्स्थैर्यं न गच्छति॥'

इति। सौख्यादीत्यादिशब्दान्नीलादि। तदुक्तम्

'..........................सौषुप्तं प्रलयोपमम्।' (ई० प्र० ३।२।१५)

इति।

'..............................'ज्ञेयशून्यता।' (ई० प्र० ३।२।१३)

इति च। तच्च ज्ञानाकलस्य पदमिति शेषः। अत्र हेतुरभिलापैकरूपाणमात्रोत्थाद्भोगयोग्यत्वादिति॥ २९१॥

ननु विज्ञानाकलानामपि किमाणवमलयोगोऽस्ति तन्निमित्तकं भोगयोग्यत्वं चेत्याशङ्क्याह

**भेदवन्तः स्वतोऽभिन्नाश्चिकीर्ष्यन्ते जडाजडाः।**
**तुर्ये तत्र स्थिता मन्त्रतन्नाथाधीश्वरास्त्रयः॥२९२॥**
**यावद्भैरवबोधान्तःप्रवेशनसहिष्णवः।**
**भावा विगलदात्मीयसाराः स्वयमभेदिनः॥२९३॥**

**तुर्यातीतपदे संस्युरिति पञ्चदशात्मके ।**

ते हि विज्ञानाकला बोधाद्येकरूपत्वादभिन्ना अपि स्वतः परमेश्वरेच्छया भेदवन्तश्चिकीर्ष्यन्ते । अतः एव भेदभाक्त्वाज्जडा, अभेदभाक्त्वाच्चाजडाः,— इत्युक्तं 'जडाजडाः' इति । यदाहुः

'बोधादिलक्षणैक्येऽपि येषामन्योन्यभिन्नता ।
तथेश्वरेच्छाभेदेन ते च विज्ञानकेवलाः ॥' (ई० प्र० ३।२।७)

इति । तत्र स्थिता इति तत्र जाग्रदादौ स्थिताः सकलप्रलयाकलविज्ञानाकला एव ये यथायोगं मन्त्रादिरूपतां प्राप्ताः सन्तस्तुर्ये प्रमातारस्तदुपादानकत्वान्मन्त्रादीनाम् । तदुक्तम्

'विशिष्टसुखदुःखादिसाधनावेदने सति ।
तत्सामान्यमयो भोगो जागरे स्मृतिमागतः ॥
सौषुप्तो मलमात्रोत्थस्तत्र विज्ञानकेवलाः ।
भेदवन्तः स्वतोऽभिन्नाश्चिकीर्ष्यन्ते जडाजडाः ॥
तत्राविश्य च त इत्थं स्वातान्त्र्यात्तुर्यमीदृशम् ।
मन्त्रतत्पतिमन्त्रेशमहेशस्थितिभाक्क्रमात् ॥'

इति । सर्वे हि परसंविद्विश्रान्त्युन्मुखा एवेति भावः । अत एव तुर्यातीतपदे प्रमातृप्रमेयात्मानः सर्वं एव भावाः परसंविदैकात्म्यसहिष्णुत्वाद्विगलदात्मीयअत एव स्वयमभेदिनः संस्युः शिवशक्तिमात्रात्मना रूपेण परिस्फुरन्तीत्यर्थः । यथोत्तरं भेदविगलनक्रमावद्योतको यावच्छब्दः । पाञ्चदश्यक्रमे चैवं जाग्रदाद्यवस्था इत्युक्तम् 'इति पञ्चदशात्मके' इति ॥ २९३ ॥

एवं मतभेदेऽपि जाग्रदाद्यवस्थानां तात्पर्येणैकमेव रूपं विश्रमयति

**यस्य यद्यत्स्फुटं रूपं तज्जाग्रदिति मन्यताम् ॥२९४॥**
**यदेवास्थिरमाभाति सपूर्वं स्वप्न ईदृशः ।**
**अस्फुटं तु यदाभाति सुप्तं तत्तत्पुरोऽपि यत् ॥२९५॥**
**त्रयस्यास्यानुसंधिस्तु यद्वशादुपजायते ।**
**स्रक्सूत्रकल्पं तत्तुर्यं सर्वभेदेषु गृह्यताम् ॥२९६॥**
**यस्त्वद्वैतभरोल्लासद्रावितांशेषभेदकम् ।**
**तुर्यातीतं तु तत्प्राहुरित्थं सर्वत्र योजयेत् ॥२९७॥**

सपूर्वमिति पूर्वानुभूतमित्यर्थः । अस्फुटमिति सुषुप्ते विश्वस्य शक्त्यात्मना-वस्थानादनुद्भिन्नरूपमित्यर्थः । ननु यद्येवं तर्ह्यत्र न किंचिदपि भायादित्या-शङ्क्याह तत्पुरोऽपि यदिति । ततः सुषुप्तात्पुरो जागरायामपि तद्भवतीत्यर्थः अत एव सुखमहमस्वाप्समित्यादिका स्मृतिः स्यात्, अत एव समनन्तरं संवादितम् 'जागरे स्मृतिमागतः' इति । त्रयस्येति जाग्रदादेः । सर्वभेदेष्विति जाग्रज्जाग्रदाद्यवान्तरप्रकारेष्वित्यर्थः । स्रक्सूत्रकल्पमिति सर्वानुगमात् । अत एवोक्तम्

'त्रिषु चतुर्थं तैलवदासेच्यम् । (शि० सू० ३।२०)

इति । तुर्यातीते पुनरनुगन्त्रनुगम्याद्यभावाद्भेदगन्धोऽपि नास्तीत्युभयमता-नुयायि तात्पर्यतो जाग्रदादीनां रूपमुक्तम् । एवं पाञ्चदश्यक्रमे जाग्रदाद्य-वस्थापञ्चकमभिधाय त्रायोदश्यादावप्यतिदिशति—इत्थं सर्वत्र योज-येदिति ॥ २९७ ॥

तदेवाह

**लयाकाले तु स्वं रूपं जाग्रत्तत्पूर्ववृत्ति तु ।**
**स्वप्नादीति क्रमं सर्वं सर्वत्रानुसरेद्बुधः ॥२९८॥**

तत्पूर्ववृत्तीति ततः स्वरूपात्पूर्ववृत्ति लयाकलादीत्यर्थः । सर्वत्रेति शिवान्तम् ॥ २९८ ॥

तदाह

**एकत्रापि प्रभौ पूर्णे चित्तुर्यातीतमुच्यते ।**
**आनन्दस्तुर्यमिच्छैव बीजभूमिः सुषुप्तता ॥२९९॥**
**ज्ञानशक्तिः स्वप्न उक्तः क्रियाशक्तिस्तु जागृतिः ।**

नचैतत् 'अग्निर्माणवकः' इत्यादिवदुपचरितमित्याह

**न चैवमुपचारः स्यात्सर्वं तत्रैव वस्तुतः ॥३००॥**
**न चेन्न क्वापि मुख्यत्वं नोपचरोऽपि तत्क्वचित् ।**

यतस्तत्र चिदेकरूपे पूर्णे प्रभावेव सर्वं भावजातं वस्तुतोऽस्ति, अन्यथा हि न किंचन चकास्यात् । यदुक्तम्

'स्वामिनाश्चात्मसंस्थस्य भावजातस्य भासनम् ।
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ॥' (ई० प्र० १।५।१०)

इति। ततश्च सकलादौ तन्मुख्यं न स्यादप्रकाशनादेव, तथात्वे च मुख्याभावादुपचारोऽपि व्याहन्येतेति वास्तवमेव शिवेऽपि जाग्रदाद्यवस्थापञ्चकम् ॥ ३०० ॥

अत्रैव प्रमाणसिद्धतामाह

**एतच्छ्रीपूर्वशास्त्रे च स्फुटमुक्तं महेशिना ॥ ३०१॥**

एतदेव श्रौतेनार्थेन च क्रमेणाह

**तत्र स्वरूपं शक्तिश्च सकलश्चेति तत्त्रयम् ।**
**इति जाग्रदवस्थेयं भेदे पञ्चदशात्मके ॥३०२॥**

**अकलौ स्वप्नसौषुप्ते तुर्यं मन्त्रादिवर्गभाक् ।**
**तुर्यातीतं शक्तिशंभू त्रयोदशाभिधे पुनः ॥३०३॥**

**स्वरूपं जाग्रदन्यत्तु प्राग्वत्प्रलयकेवले ।**
**स्वं जाग्रत्स्वप्नसुप्ते द्वे तुर्याद्यत्र च पूर्ववत् ॥३०४॥**

**विज्ञानाकलभेदेऽपि स्वं मन्त्रा मन्त्रनायकाः ।**
**तदीशाः शक्तिशंभ्वित्थं पञ्च स्युर्जाग्रदादयः ॥३०५॥**

**सप्तभेदे तु मन्त्राख्ये स्वं मन्त्रेशा महेश्वराः ।**
**शक्तिः शंभुश्च पञ्चोक्ता अवस्था जाग्रदादयः ॥३०६॥**

**स्वरूपं मन्त्रमाहेशी शक्तिर्मन्त्रमहेश्वरः ।**
**शक्तिः शंभुरिमाः पञ्च मन्त्रेशे पञ्चभेदके ॥३०७॥**

**स्वं क्रिया ज्ञानमिच्छा च शंभुरत्र च पञ्चमी ।**
**महेशभेदे त्रिविधे जाग्रदादि निरूपितम् ॥३०८॥**

स्वरूपं धाराद्यव्यक्तान्तं, सकलशब्दसंनिधानात्तदीयैव शक्तिः। अकलौ प्रलयाकलविज्ञानाकलौ। स्वरूपमिति सकलतच्छक्तिसहितं कलान्तमन्यत्प्राग्वदिति तदकलौ स्वप्नसुप्ते, तुर्यं मन्त्रादिवर्गभाक्, तुर्यातीतं शक्तिशंभू,—

इत्यनुसर्तव्यम् । 'प्रलयाकल' इत्यर्थाद्वेद्ये, तेनैकादशात्मके भेदे इत्यर्थः । स्वमिति प्रलयाकलाद्यात्मकं स्वरूपं यत्प्रावस्वप्नपदं समभवत् । 'द्वे' इति विज्ञानाकलतच्छक्ती, तेन विज्ञानाकलशक्तिः स्वप्ने, विज्ञानाकलस्तु सुषुप्ते इति । पूर्ववदिति तेन तुर्ये मन्त्रादयस्तुर्यातीते तु शक्तिशिवाविति । 'विज्ञानाकलभेद' इति नवात्मके भेदे इत्यर्थः । स्वमिति विज्ञानाकलादिरूपं यत्प्राक्स्वप्नसौषुप्तदशामध्यशेत । 'जाग्रदादय' इत्यनेन क्रमः सूचितः, तेन 'सशक्तिर्विज्ञानाकलो जाग्रत् यावच्छक्तिशिवौ तुर्यातीतमिति । स्वं मन्त्रादिरूपं जाग्रद्यत्प्राक्स्वप्नदशामधिशयानमासीत्, तेन स्वप्ने मन्त्रेश्वराः, सुप्ते मन्त्रमहेश्वरास्तुर्ये शक्तिस्तुर्यातीते तु शंभुरिति । स्वरूपमिति मन्त्रेश्वरादिरूपं जाग्रद्यत्प्रावस्वप्नपदमासीत् मन्त्रमहेश्वरशक्तेरारभ्य पुनः क्रमात्स्वप्नाद्या अवस्थाः । स्वमिति मन्त्रमहेश्वरादिरूप जाग्रद्यावच्छंभुः । पञ्चमी तुर्यातीतावस्था स्यात् । अस्मद्दर्शने च वस्तुतः शिवशक्तेस्त्रैरूप्यमेवोदितमित्युक्तं क्रिया ज्ञानमिच्छा चेति ॥ ३०७ ॥

न केवलमियदन्तमेव जाग्रदादि निरूपणीयतया संभवेद्यावद्विगलितभेदसद्भावे शिवेऽपीत्याह

**व्यापारादाधिपत्याच्च तद्धान्या प्रेरकत्वतः ।**
**इच्छानिवृत्तेः स्वस्थत्वाच्छिव एकोऽपि पञ्चधा ॥३०९॥**

एतच्च समनन्तरमेवोक्तं विभज्य ग्रन्थकृतास्माभिश्च व्याख्यातमिति नेह पुनरायस्तम् । तदुक्तं तत्र

'स्वरूपं तत्र शक्तिश्च सकलश्चेति तत्त्रयम् ।
इति जाग्रदवस्थेयं भेदे पञ्चदशात्मके ॥
अकलौ द्वौ परिज्ञेयौ सम्यक्स्वप्नसुषुप्तयोः ।
मन्त्रादितत्पतीशानवर्गस्तुर्य इति स्मृतः ॥
शक्तिशंभू परिज्ञेयौ तुर्यातीते वरानने ।
त्रयोदशात्मके भेदे स्वरूपसकलावुभौ ॥
मन्त्रमन्त्रेश्वरेशानाः शक्तिशावपि पूर्ववत् ।
प्रलयाकलभेदेऽपि स्वं विज्ञानकलावुभौ ॥
मन्त्रमन्त्रेश्वरेशानाः शक्तीशावपि पूर्ववत् ।
नवधा कीर्तिते भेदे स्वं मन्त्रा मन्त्रनायकाः ॥

तदीशाः शक्तिशंभू च पञ्चावस्थाः प्रकीर्तिताः।
पूर्ववत्सप्तभेदेऽपि स्वं मन्त्रेशेशशक्तयः॥
शिवश्चेति परिज्ञेयाः पञ्चैव वरवर्णिनि।
स्वं शक्तिः स्वा निजेशानाः शक्तिशंभू च पञ्चके॥
त्रिके स्वं शक्तिशक्तोच्छाशिवभेदं विलक्षयेत्।
सव्यापाराधिपत्वेन तद्धीनप्रेरकत्वतः॥
इच्छानिवृत्तेः स्वस्थत्वादभिन्नं चेति पञ्चधा।' ( मा० वि० १।३५ )

इति। प्रमातृभेदश्च वस्तुधर्मादिषु त्रिष्वपि प्रमेयेष्वन्तः प्रतिपदमुक्तः,—इति तेन नेह पृथगुपात्तः॥ ३०८॥

एतदेव प्रथमार्धेनोपसंहरति

**इत्येष दर्शितोऽस्माभिस्तत्त्वाध्वा विस्तरादथ।**

विस्तारदिति, पूर्वाह्निके हि संक्षेपेण षट्त्रिंशद्धा एतदुक्तम्, इह तु प्रतितत्त्वं पाञ्चदश्यादिक्रमेणान्यथेति भावः। अथेत्यन्ते मङ्गलार्थमिति शिवम्॥

कौमारिलनैयायिकमतविमतिसत्तत्त्वविज्जयरथाख्यः।

अख्यापयदतिविशदां दशमाह्निके विवृतिरीतिमिमाम्॥

इति श्रीतन्त्रालोकविवेके तत्त्वभेदप्रकाशनं
नाम दशममाह्निकम्॥

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकाख्यटीकोपेते

## एकादशमाह्निकम्

स्वात्ममहाभीमरवामर्शनवशशकलिताध्वसन्तानः ।
भवदुर्गभञ्जनजयोत्साहो जयताज्जयोत्साहः ॥

इदानीमपरार्धेन कलाध्वानमुपक्रमते

**कलाध्वा वक्ष्यते श्रीमच्छांभवाज्ञानुसारतः ॥ १ ॥**

ननु कलैव नाम किमुच्यते यस्या अप्यध्वपरिभाषा स्यात्,—इत्याशङ्क्याह

**यथा पूर्वोक्तभुवनमध्ये निजनिजं गणम् ।**
**अनुयत्परतो भिन्नं तत्त्वं नामेति भण्यते ॥ २ ॥**
**तथा तेष्वपि तत्त्वेषु स्ववर्गेऽनुगमात्मकम् ।**
**व्यावृत्तं परवर्गाच्च कलेति शिवशासने ॥ ३ ॥**

तत्त्वेष्विति मध्ये, स्ववर्गं इति वक्ष्यमाणनीत्यैकतत्त्वादिरूपे, व्यावृत्तमिति अश्वादिभ्य ए(इ)व गोत्वम् ॥ ३ ॥

अत्रैव पक्षान्तरं प्रदर्शयति

**केचिदाहुः पुनर्यासौ शक्तिरन्तः सुसूक्ष्मिका ।**
**तत्त्वानां सा कलेत्युक्ता धरण्यां धारिका यथा ॥ ४ ॥**

सुसूक्ष्मिकेति कार्यान्यथानुपपत्त्या परिकल्प्यमाना स्वयमलक्ष्यत्वात् । एवं धरण्या यथा धारिका शक्तिरनुगतास्ति तथा परां काष्ठां प्राप्ताद्वहि-

मुखत्वान्निवर्तकत्वेन कलयित्री निवृत्त्याख्यापि,—इत्युक्तं स्यात् । एवमवादिमूलान्तं तत्त्वचतुर्विंशतेरपि भेदव्यवहार एव प्रतिष्ठानेन कलयित्री प्रतिष्ठाख्या शक्तिः । एवमन्यासामपि संकुचितात्मरूपत्वस्य वेदनेन मायीयपदस्योपशमनेन तदतीतत्वेन च कलनात्तदाख्यत्वं च ज्ञेयम् ॥ ४ ॥

न चात्र वस्तुतः प्रक्षद्वयेऽपि कश्चिद्विशेषोऽस्तीत्याह

**अत्र पक्षद्वये वस्तु न भिन्नं भासते यतः ।**
**अनुगामि न सामान्यमिष्टं नैयायिकादिवत् ।। ५ ।।**

यतः पूर्वस्मिन्नपि पक्षे शक्तिरूपतामपहाय नैयायिकादिवदनुगममात्रलक्षणमेव सामान्यं नाभिप्रेतं तदुभयत्रापि शक्तिरूपत्वानुगमस्याविशेषान्न कश्चिदतिशय इति ॥ ५ ॥

अत्र चान्येषां मतान्तरमप्यस्तीत्याह

**अन्ये वदन्ति दीक्षादौ सुखसंग्रहणार्थतः ।**
**शिवेन कल्पितो वर्गः कलेति समयाश्रयः ।। ६ ।।**

ननु समयो नामेच्छामात्रनिबन्धनः संकेतः स चापारमार्थिकत्वादसत्यः, अत एव समयान्तरमप्युत्सहते, इत्येवं नियमो न स्यात्,—इत्याशङ्क्याह

**कृतश्च देवदेवेन समयोऽपरमार्थताम् ।**
**न गच्छतीति नासत्यो न चान्यसमयोदयः ।। ७ ।।**

अपारमार्थिकत्वागमनेऽसत्यत्वाभावे समयान्तरानुदये च देवदेवकृतत्वं हेतुः, अन्यथा ह्येतत्त्रयमप्यत्र संभाव्यं भवेदिति भावः ॥ ७ ॥

नन्वासां च किमनुगन्तव्यं किं वा सुखेन संग्रहणीयमित्याशङ्क्याह

**निवृत्तिः पृथिवीतत्त्वे प्रतिष्ठाव्यक्तगोचरे ।**
**विद्या निशान्ते शान्ता च शक्त्यन्तेऽण्डमिदं चतुः ।। ८ ।।**

अण्डमिदं चतुरिति, इदमेव निवृत्त्यादिकलासमव्याप्तिकमण्डचतुष्टयमित्यर्थः । तदुक्तम्

'पार्थिवं प्राकृतं चैव मायीयं शाक्तमेव च ।
इति संक्षेपतः प्राक्तमेतदण्डचतुष्टयम् ।।' ( मा० वि० २।४९ )

इति। 'शक्त्यन्त' इत्यनेन व्यापिनीपदादौ कलान्तरस्यावकाशोऽस्ति,—इति प्रकाशितम् ॥ ८ ॥

तदाह

**शान्तातीता शिवे तत्त्वे कलातीतः परः शिवः ।**

'शिवे तत्त्वे' इत्यर्थादाक्षिप्तशक्तितत्त्वे सर्वाविभागात्मनि षट्त्रिंशे यस्य समनन्तरमेव सकलसंकल्पनाकलङ्ककवलीकाराभिद्योतनायोपदेश्यजनापेक्षया सप्तत्रिंशादित्वेन कल्पितमपि रूपान्तरं लक्ष्यते। अत एवोक्तं 'कलातीतः परः शिवः' इति। 'कलातीत' इति समग्रकलोज्झित्वान्निष्कल इत्यर्थः, अत एव पर इत्युक्तम्

एतदेवोपपादयति

**नह्यत्र वर्गीकरणं समयः कलनापि वा ॥ ९ ॥**

**युज्यते सर्वतोदिक्कं स्वातन्त्र्योल्लासधामनि ।**

वर्गीकरणं प्रकारद्वयात्मा पक्षः, आद्यः समयोऽन्यः कलना तथातथाविकल्पनाम्। अत्र सर्वतः स्वातन्त्र्योल्लासधामत्वं हेतुः ॥ ९ ॥

ननु यद्येवं तत् 'सर्वक्रियाणां कर्ता शिवो विज्ञेयः' इत्युपदेशादौ कथमसौ कलनियतां यायात्,—इत्याशङ्क्याह

**स्वातन्त्र्यात्तु निजं रूपं बोद्धृधर्मादविच्युतम् ॥ १० ॥**

**उपदेशतदावेशपरमार्थत्वसिद्धये ।**

**बोध्यतामानयन्देवः स्फुटमेव विभाव्यते ॥ ११ ॥**

**यतोऽतः शिवतत्त्वेऽपि कलासंगतिरुच्यते ।**

'अत' इति बोद्धृत्वेऽपि स्वस्वातन्त्र्याद्बोद्धव्यत्वेन विभावनात्कलासंगतिरिति तथातथाविकल्पनसंबन्ध इत्यर्थः। तदुक्तम्

'स्यातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याद‌द्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥' (ई० प्र० १।५।१६)

इति। एतच्च बहुप्रकारं प्रागुपपादितमिति न पुनरिहायस्तम्। इतया च कलास्वरूपमुक्तम् ॥ ११ ॥

ननु भवतु नामैतन्नास्माकमत्र विप्रतिपत्तिः किन्तु शक्त्यन्तमेव यावत् कस्मादण्डत्वमुक्तं न तु व्यापिन्यादावित्याशङ्क्याह

**अण्डं च नाम भुवनविभागस्थितिकारणम् ।। १२ ।।**

**प्राहुरावरणं तच्च शक्त्यन्तं यावदस्ति हि ।**

तदिति आवरणम् ।। १२ ।।

नन्वत्र भुवनानां विभागेनावस्थानमस्ति तत्कारणमण्डरूपमावरणं च नास्ति,—इत्यपूर्वमिदमभिधानमित्याह

**यद्यपि प्राक् शिवाख्येऽपि तत्त्वे भुवनपद्धतिः ।। १३ ।।**

**उक्ता तथाप्यप्रतिघे नास्मिन्नावृतिसंभवः ।**

'शिवाख्येऽपि तत्त्वे' इति तात्स्थ्यात् व्यापिन्यादावपीत्यर्थः । 'अप्रतिघ' इति विश्वोत्तीर्णतया शून्यरूपत्वात्, आवृत्यभावे चायमेव विशेषणद्वारेण हेतुः ।। १३ ।।

ननु प्रतीघातो नाम मूर्तधर्मो मूर्तत्वं च पृथिव्यामेव संभवेत्, ततश्च तामपहायान्यत्राण्डस्य संभवो न न्याय्यः,—इत्याह

**नन्वेवं धरणीं मुक्त्वा शक्तौ प्रकृतिमाययोः ।। १४ ।।**

**अपि चाप्रतिघत्वेऽपि कथमण्डस्य संभवः ।**

**अत्रास्मद्गुरवः प्राहुर्यत्पृथिव्यादिपञ्चकम् ।। १५ ।।**

**प्रत्यक्षमिदमाभाति ततोऽन्यन्नास्ति किंचन ।**

**मेयत्वे स्थूलसूक्ष्मत्वान्मानत्वे करणत्वतः ।। १६ ।।**

**कर्तृतोल्लासतः कर्तृभावे स्फुटतयोदितम् ।**

**त्रिंशत्तत्त्वं विभेदात्म तदभेदो निशा मता ।। १७ ।।**

**कार्यत्वकरणत्वादिविभागगलने सति ।**

**विकासोत्कस्वतन्त्रत्वे शिवान्तं पञ्चकं जगुः ।। १८ ।।**

यतः प्रत्यक्षसिद्धात्पृथिव्यादिपञ्चकादन्यत् किंचिन्नास्ति, तद्भित्त्यवलम्बनेनैव निखिलस्य विश्वस्योदय इत्यर्थः । यतोऽस्य मेयत्वे सति उक्तहेतुपञ्चक-

बलात् त्रिंशतस्तत्त्वानां विभेदेनोदयः। तथा च स्थूलसूक्ष्मरूपं पृथिव्यादीनां पञ्चकद्वयमेतद्रूपमेवेति तावन्नास्ति विप्रतिपत्तिः, ज्ञानांशस्पर्शात्प्रमाणरूपं बुद्धीन्द्रियपञ्चकमप्येतन्मूलमेव। नहि मेयमपहाय मानत्वं नाम किंचिद्भवेदिति भावः। कर्त्रंशस्पर्शात् करणरूपं कर्मेन्द्रियपञ्चकमप्येतदालम्बनमेव, कार्यमन्तरेण करणत्वायोगात् कर्तृत्वे च कार्यविषयमेव भवेत्,—इति मनःप्रभृति तत्त्वपञ्चकमप्येवम्, अन्यथा हि कर्तृत्वमेव नोल्लसेत्। यद्यप्यन्तःकरणत्रयं करणपक्षनिक्षिप्तमेव तथापि कर्तुरन्तरङ्गत्वाद्बहिष्करणद्वारेण च बाह्यविषयसंस्पर्शादिवमुक्तम्। प्रकृतेश्च बुद्ध्यादिकर्त्रुपकरणकारणत्वात्पारम्पर्येण कर्तृतोल्लासकत्वमित्येवमभिधानम्। एवं नियत्यादिकञ्चुकपञ्चकमपि

'अधुनैव किंचिदेवेदमेव सर्वात्मनैव जानाति।' (पर० सा० १७ श्लोक)

इत्याद्युक्तयुक्त्या कर्तृत्वस्यैवोपोद्बलत्वात् तदवलम्बनमेवेति। नन्वेवं मायादि ततोऽन्यत्स्यात्,—इत्याशङ्क्याह 'तदभेद' इत्यादि। तच्छब्देनात्र पृथिव्यादीनां परामर्शः। एतदभेदे च कार्यत्वादिविभागगलनं निमित्तं, कारणे हि कार्यस्य सूक्ष्मेण रूपेणावस्थानं भवेत्,—इति भावः। विकासोत्केति, यथायथमिदन्तायाः संकोचेनाहन्तायाः समुल्लासात्, इदन्तायाश्च संकुचन्त्या अपि मेयनिष्ठत्वं निर्विवादमेवेति युक्तमुक्तमस्मद्गुरुभिः 'पृथिव्यादिपञ्चकादन्यत् किंचिन्नास्ति' इति ॥ १८ ॥

न च स्वोपज्ञमेवैतदुक्तमित्याह

**श्रीमत्कालोत्तरादौ च कथितं भूयसा तथा।**
**पञ्चैतानि तु तत्त्वानि यैर्व्याप्तमखिलं जगत् ॥ १९ ॥**

तदेवाह पञ्चेत्यादि। एतानीति पृथिव्यादीनि। यदुक्तं तत्र

'पृथिव्यापस्तथा तेजो वायुराकाशमेव च।'

इति ॥ १९ ॥

अत एव सद्योजातादेरप्येषैव व्याप्तिः सर्वत्रोच्यते,—इत्याह

**पञ्चमन्त्रतनौ तेन सद्योजातादि भण्यते।**
**ईशानान्तं तत्र तत्र धरादिगगनान्तकम् ॥ २० ॥**

तेनेति पृथिव्यादीनामेवोक्तेन जगद्व्यापकत्वेन हेतुना, तत्र तत्र श्रीकालोत्तरादौ। यदुक्तं तत्र

'सद्यस्तु पृथिवी ज्ञेया वामो ह्यापः प्रकीर्तिताः ।
अघोरस्तेज इत्युक्तं वायुस्तत्पुरुषः स्मृतः ॥
आकाशस्तु भवेदीशः स्वयं देवो महेश्वरः ।

इति । श्रीपरेऽपि

'सद्यः क्षितिर्जलं वामोऽघोरस्तेजो नरो मरुत् ।
ईशः खं .... .... .... .... .... .... .... .... ॥'

इति ॥ २० ॥

एवं शक्त्यन्तमेव यावदावरणं संभवतीत्युपपादितं, ततश्च व्यापिन्यादावावरणं नास्तीत्याह

**शिवतत्त्वमतः शून्यातिशून्यं स्यादनाश्रि[वृ]तम् ।**

'अत' इति शक्त्यन्तमेव यावदावरणस्य संभवात् । शून्यातिशून्यमिति 'शून्यात्' व्यापिन्यादिपदाद्भावसंस्कारस्यापि प्रक्षयादतिशून्यं षट्त्रिंशं तत्त्वमित्यर्थः । अत एवावरणविगमादनावृतमित्युक्तम् । ततश्च नात्राण्डव्यपदेशः,–इति युक्तमुक्तं शक्त्यन्तं यावदण्डत्वमिति ॥

नन्वेवं विश्वोत्तीर्णमेव षट्त्रिंशं तत्त्वमित्युक्तं भवेत्, ततश्च स्वतन्त्रबोधैकरूपं विश्वमयं परं तत्त्वमिति रिक्ता वाचोयुक्तिः स्यात्,—इत्याशङ्क्याह

**यत्तु सर्वाविभागात्म स्वतन्त्रं बोधसुन्दरम् ॥ २१ ॥**
**सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम् ।**

इह खलु विश्वोत्तीर्णत्वेऽपि विश्वमयमेकमेव रूपं स्वतन्त्रबोधात्मकं परं तत्त्वं यत् सर्वत्र षट्त्रिंशं तत्त्वमित्युद्घोष्यते । तत्र चाविद्यापदपतिताः प्रतिपत्तारो विप्रतिपद्यन्ते—यदेकस्मिन्नेव रूपे कथं विरुद्धधर्मसंसर्गः स्यादिति, यदभिप्रायेणैवैतद्रूपमतः पृथक्कृत्योक्तं सप्तत्रिंशमिति । नहि वस्तुतः किंचिदेवं तत्त्वं संभवति, तथात्वे हि 'षट्त्रिंशत्तत्त्वमुखानि' इत्यादिश्रुतिविरोधः स्यात् । न चैवमत्र कश्चिद्विरोधः, स ह्युभयवस्त्वधिष्ठानो भवेत् । न चात्रैकमपि वस्तु संभवति, नहि परं तत्त्वमधिकृत्य विश्वमेव नाम किंचिद्वस्तु सदस्ति यदुत्तीर्णत्वेन यन्मयत्वेन चात्र विरोधः परापतेत् । तस्मात् षट्त्रिंशस्यैव तत्त्वस्य सर्वाविभागात्मत्वाद्यात्मकमेकं रूपं सप्तत्रिंशत्वेन परिकल्पितं भेदात्तान् प्रमातॄन् प्रत्येवमुपदेशात् ॥ २१ ॥

नन्वेवमस्तु को दोषः, एतस्यापि रूपस्य भावनोपदेशादौ पुनर्यदा वेद्यभावः परिकल्प्यते तदा कस्य प्रमातृत्वं स्यात्,—इत्याशङ्क्याह

**तस्याप्युक्तनयाद्वेद्यभावेऽत्र परिकल्पिते ॥ २२ ॥**

**यदास्ते ह्यनवच्छिन्नं तदष्टात्रिंशमुच्यते ।**

उक्तनयादिति, 'स्वातन्त्र्यात्तु निजं रूपं' (त० लो० ११।१०) इत्यादिरूपात्। यदिति विश्वोत्तीर्णाद्यपेक्षया तृतीयं रूपं, वस्तुतो हि विश्वोत्तीर्णत्वादिरूपत्वेऽपि स्वतन्त्रबोधः परमार्थः,—इत्यादिनीत्यानवच्छिन्नं बोधमात्रमेवास्य परं रूपं यदष्टात्रिंशमिति परिकल्प्यते ॥ २२ ॥

नन्वेवं तस्यापि वेद्यत्वपरिकल्पनेऽन्यः प्रमाता कल्पनीयस्तस्याप्यन्य इत्यनवस्था स्यात्,—इत्याशङ्क्याह

**न चानवस्था ह्येवं स्याद्दृश्यतां हि महात्मभिः ॥ २३ ॥**

एतदेव दर्शयति

**यद्वेद्यं किंचिदाभाति तत्क्षये यत्प्रकाशते ।**

**तत्तत्त्वमिति निर्णीतं षट्त्रिंशं हृदि भासते ॥ २४ ॥**

'तत्क्षये' इति तस्य समनान्तस्य वेद्यस्य। यदिति वेदकैकरूपं, प्रकाशते इत्ययत्नमेव सर्वेषां साक्षात्कृतं भवेदित्यर्थः। यदाहुः

> नाथ वेद्यक्षये केन न दृश्योऽस्येकको भवान्।' (उ० स्तो० १।८)

इति। षट्त्रिंशमिति, विश्वोत्तीर्णं रूपमित्यर्थः ॥ २४ ॥

नन्वेवमस्य किं विश्वविविक्ततैव रूपमुतान्यत्किंचित्तदतिरिक्तं, तदाह

**तत्किं न किंचिद्वा किंचिदित्याकाङ्क्षावशे वपुः ।**

तत्राद्यः पक्षो दूरापेतो, नहि घटाभाव एव पटस्य रूपं भवितुमर्हति; अतश्चैतदनागूर्यैव पक्षान्तरं दर्शयति

**चिदानन्दस्वतन्त्रैकरूपं तदिति देशने ॥ २५ ॥**

**सप्तत्रिंशं समाभाति तत्राकाङ्क्षा च नापरा ।**

तत्र चिता बोधसुन्दरत्वमानन्दे[न]च सर्वाविभागात्मत्वमुक्तम्। शक्तिदशायामेव हि विश्वमविभागेन भवेदिति भावः। एवमुपदेशे च षट्-

त्रिंशादतिरिक्तं रूपमुपदिष्टं भवेदित्युक्तम्, इति देशने सप्तत्रिंशं समाभाति' इति। नहि यदेव विश्वोत्तीर्णं तदेव विश्वमयं भवितुमर्हति,—इत्युक्तप्रायम्। एवं चास्य चिदानन्देत्यादिना साक्षात्तात्त्विकं रूपमुक्तम्,—इत्यत्रान्यत् किंचिदाकाङ्क्षणीयं नास्तीत्युक्तं—तत्राकाङ्क्षा च नापरेति ॥ २५ ॥

एवमुपदेश्यत्वादेव वेद्यभावः पुनरवस्थितः,—इत्यस्य केनचिद्वेदकेन भाव्यं, स एव पुनः कतरः,—इत्याशङ्क्याह

**तच्चापि क्लृप्तवेद्यत्वं यत्र भाति स चिन्मयः ॥ २६ ॥**

**अष्टात्रिंशत्तमः सोऽपि भावनायोपदिश्यते ।**

**यदि नाम ततः सप्तत्रिंश एव पुनर्भवेत् ॥ २७ ॥**

'चिन्मय' इत्यनवच्छिन्नबोधमात्ररूप इत्यर्थः। नन्वियमेव सानवस्था यत्तस्य वेद्यभावे कल्पिते प्रमात्रन्तरेण भाव्यं, तस्याप्येवमिति, तदेतदाशङ्क्याह सोऽपीत्यादि ॥ २७ ॥

ननु कथमष्टात्रिंश एव सप्तत्रिंशो भवेदित्याशङ्क्याह

**अविभागस्वतन्त्रत्वचिन्मयत्वादिधर्मता ।**

**समैव वेद्यीकरणं केवलं त्वधिकं यतः ॥ २८ ॥**

विरुद्धधर्माध्यासस्तावद्भेदहेतुरित्यविवादः। सर्वाविभागात्मत्वादेश्चाविशेषात् स एवात्र नास्ति,—इति कुतस्त्योऽयमनयोर्भेदः। यावता हि वेद्यत्वमात्रमत्राधिकं येनैकैकस्य वेद्यत्वं परिकल्प्यतेऽन्यस्य च वेदकत्वम्। एवमेवंविधं परं तत्त्वं यदा कल्पितवेद्यभानं[वं] भवेत् तदा सप्तत्रिंशमुच्यतेऽन्यथा त्वष्टात्रिंशमिति। न चाष्टात्रिंशस्यैव वेद्यभावे कल्पिते सप्तत्रिंशादन्यदपूर्वं किंचिद्रूपमुक्तं भवेत्, नाप्यन्यस्य तद्वेदकस्य कल्प्यमानस्य ततः, इत्यनयोः क्रियाव्यवहारवत्पारस्परिक एव वेद्यवेदकभावः,—इत्यनवस्थाया न कश्चिदवकाशः। वस्तुतो हि सर्वशास्त्रेषु षट्त्रिंशत्वेन गीयमानमनवच्छिन्नं बोधमात्रमेव परतत्त्वमित्युक्तं, तस्यैव पुन; स्वस्वातन्त्र्यादेवं भेदोल्लासो येन मायाप्रमात्रपेक्षया महागुरूणां यथागममेवमुपदेशः,—इत्यलं पिष्टपेषणेन। आः किमुच्यते यथागममिति, को नामायमागमः न तावत्प्रकृतं पूर्वशास्त्रं, नहि तत्रैतत्किंचिदुक्तं प्रत्युत तत्र दीक्षादौ

'षट्त्रिंशत्तत्त्वभेदेन न्यासोऽयं समुदाहृतः। ( मा० वि० ६।६ )

इत्याद्येतद्विरुद्धमेवाभिहितम्। ग्रन्थकृता च तत्त्वाध्वप्रकाशनादौ तत्र तत्र तन्मयानुवर्तनमेव कृतम्। एवंविधश्च कश्चिदागमोऽपि न संवादितः। प्रक्रियाप्रतिपादकाश्चान्ये सर्व एवागमास्तथैवेति किं नाम तथाविधमागमान्तरमस्ति यदनतिक्रमेणापूर्वतयैवमुपदेश;,—इति। अस्त्येव ह्येवंविधमागमान्तरम्। तथा च श्रीकुलरत्नमालायाम्

'तत्त्वाध्वानं प्रवक्ष्यामि यथा ज्ञास्यसि सुव्रते।
चरशक्तिद्वयं पूर्वं तदूर्ध्वं पञ्चकं स्मृतम्॥
चतुष्कं च ततो देवि द्विरन्ध्रं जन्म एव च।
व्याप्तिर्वैकुण्ठसंघट्टो व्याप्तिश्चैव तु लम्बिका॥
रन्ध्रं तु अष्टमं देवि अर्धेन्दुः कुण्डली प्रिये।
शान्तं चैव प्रशान्तं च विन्दुर्नित्योदितस्तथा॥
ऊर्ध्वे नादं विजानीयात्षट् चक्राणि तदूर्ध्वतः।
शक्तितत्त्वं तु षट्चक्रं शिवतत्त्वं तथैव च॥
अष्टात्रिंशदमी तत्त्वास्तथाध्वायं वरानने।
लौकिको यो न जानाति कथं दीक्षां तु कारयेत्॥'

इत्याद्युक्तम्। नन्वत्र परमेश्वरेण प्रतिज्ञयापि तत्त्वाध्वप्रवचनं पञ्चत्रिंशषट्त्रिंशयोरेव तत्त्वयोः साक्षादभिधानं कृतं न तु प्रसिद्धानामपि तत्त्वान्तराणां, का वार्ता तु सप्तत्रिंशाष्टात्रिंशयोः, प्रत्युत म्लिष्टप्रायमालूनविशीर्णं किं तावदप्रातीतिकमुक्तम्,—इति न जानीमः।

ननु स्थितमेवात्र सर्वतत्त्वप्रवचनं किन्तु षट्त्रिंशत्तत्त्वविषयायामविगीतायामपि प्रसिद्धौ सप्तत्रिंशाष्टात्रिंशयोरपूर्वतयाभिधानेन सुकुमारहृदयानामागमिकानां संमोहो मा भूदिति करुणापरस्य परमेश्वरस्य गूढार्थतया तथोक्तनीत्या मायाप्रमात्रपेक्षया कल्पनामात्रसारमेवमभिधानं, तच्च गुरूपसेवनादावदृष्टकष्टैः स्वावमर्शशून्यैश्च कथमेवमेवावगम्यते,—इत्यामुखे म्लिष्टप्रायत्वादि लक्ष्यते। वस्तुतस्तु स्थितमेव सर्वतत्त्वानामभिधानम्। तथा च चरशब्देनात्र चरेर्गत्यर्थत्वाद्गतिक्रियोच्यते, तस्याश्चाकरणिका क्रिया न संभवति,—इति साधकतमतया परिकल्प्यमाना पादेन्द्रियात्मिका येयं शक्तिस्तस्या यद्द्वयं समस्तशरीरव्यापकत्वेऽपि अधिष्ठात्रधिष्ठेययोरभेदोपचारान्मुख्यमधिष्ठानस्थानं पादयुग्मं, तेन तत्त्वक्रमप्रवचनस्य प्रक्रान्तत्वाद्धरातत्त्वं लक्ष्यते,—इति पूर्वं प्रथमं स्थौल्यस्य परां काष्ठां प्राप्तं धरातत्त्वं स्मृतमित्यर्थः। तदूर्ध्वमप्यबाद्याकाशान्तं चतुष्कमावृत्त्या 'तदूर्ध्वं च पञ्चकं चतुष्कं' गन्धतन्मात्रं पुमन्तं

तत्त्वविंशकं स्मृतमित्येवं पञ्चविंशतितत्त्वान्युक्तानीति सिद्धम्। चतुष्कशब्दस्य च तदूर्ध्वंपदानन्तरं निर्देष्टव्यत्वेऽपि उभयत्रापि सम्बन्धसहिष्णुताप्रतिपादनाभिप्रायेणात्र निर्देशः। एषां च गणनामात्रेणैव निर्देशे दर्शनान्तरेष्वपि प्रसिद्धत्वं निमित्तम्, अत एव स्मृतमित्युक्तं न तूच्यते इत्युक्तमिति वा। तदनन्तरमपि 'द्विरन्ध्रं' द्वे रन्ध्रे ज्ञानक्रियालक्षणं मार्गद्वयं तद्गतं 'जन्म' स्वरूपगोपनाबलात्तिरस्कृतस्य प्रतिप्रसवभङ्ग्या किंचित्त्वेन पुनराविर्भवनं, तेन तदुपोद्बलकं कलाविद्यात्मकं तत्त्वद्वयमेतदित्युक्तं स्यात्। कञ्चुकानां च क्रमस्यावास्तवत्वादनयोः प्राधान्यात्पुंस्तत्त्वानन्तर्येण वचनम्। 'व्याप्तिः' विशिष्टाप्तिः सामान्यकारविषयमात्रावच्छिन्नः 'किंचिन्मे भूयात्' इत्येवमात्मक आसङ्गो रागतत्त्वमित्यर्थः। 'वैकुण्ठेन' कण्ठदेशस्थेन विष्णुना सह 'संघट्टो' मेलनमस्यास्ति,—इत्यनेन नियतितत्त्वमुक्तम्। अस्यापि ह्यङ्गुलदीक्षायां वक्ष्यमाणक्रमेणादूरविप्रकर्षात्कण्ठ एव देशः,—इत्याशयः। यद्वा स्थितिकारिणो वैकुण्ठस्य नियतिसंरक्षणमेव मुख्यया वृत्त्या कार्यमित्यस्यास्तथात्वमुक्तम्। 'व्याप्तिः' व्यापकत्वात्कालतत्त्वं, नहि तत्किंचिज्जगदुदरवर्त्ति पदार्थजातं संभवति यन्न कालेन कलितमिति। लम्बिकेति, तात्स्थ्यान्माया। 'पाठक्रमादार्थः क्रमो बलीयान्' इति स्थित्या बिन्दुर्वेदनमिति, वेद्यतेऽनेनेति वा विद्या तदाख्यं द्वात्रिंशं तत्त्वमित्यर्थः। तथा स एव

'ईश्वरो बहिरुन्मेषः............ ।' ( ई० प्र० ३।१३ )

इत्याद्युक्त्या नित्योदितोऽत एव विदिक्रियाकर्तृत्वेन प्रवृत्तत्वाद्बहिरुल्लसद्रूप ईश्वरस्तदाख्यं तत्त्वमिति यावत्। अस्यैव चावान्तरमान्त्रप्रमेयसंग्रहणपरत्वेनार्धेन्दुरिति विशेषणम्। अत एव नादान्तस्यापि नादान्तःकारो व्याकार्यः। नादमिति, सादाशिवं तत्त्वमित्यर्थः। 'ऊर्ध्वं' इत्यस्यावृत्त्या सदाशिवस्याप्यूर्ध्वे 'कुण्डली'

'..................... तदूर्ध्वं शक्तिकुण्डली ।'

इति वचनाच्छक्तिः। यथायथमावरणविगमाच्च 'शान्तं' व्यापिन्याः, 'प्रशान्तं' समनाया रूपम्। एतच्च कुण्डल्यादित्रयं तात्स्थ्यादूर्ध्वं ब्रह्मरन्ध्रोर्ध्ववर्तीत्यर्थः। तच्च रन्ध्रमष्टमं नादादारभ्य वैलोम्येन तावत्संख्याकत्वात्; अनेन चैवंरूपं पञ्चत्रिंशं शक्तितत्त्वमुक्तम्। ननु यद्येवं तत् 'षट् चक्राणि तदूर्ध्वंत' इति तच्छब्देन किं नादः परामृश्यते किमुत व्यवहितमपि कुण्डल्यादित्रयम्, एवंपरामर्शेपि 'षट् चक्राणि' इति किमुच्यते,—इत्याशङ्क्योक्तं

शक्तितत्त्वं तु षट्चक्रमिति। षट्चक्राणि शक्तितत्त्वादन्यन्न किंचिदित्यर्थः। परमेश्वरस्य हि स्वातन्त्र्याख्या समवायिनी शक्तिरेव समनादिनेच्छादिना चान्तर्बहीरूपेण त्रैरूप्येण प्रस्फुरन्ती सती षट्चक्रं शक्तितत्त्वमित्युक्तम्। चक्रशब्दो ह्यत्र 'कृती च्छेदने' इत्यस्य धातो रूपं विवक्षितं, तेन यथोक्तगत्या षोढा भेदितमित्यर्थः। ननु 'पञ्चत्रिंशत्तत्त्वी शिवनाथस्यैव शक्तिरुक्तेयम्' इत्याद्युक्त्या शिवतत्त्वं तावत्षट्त्रिंशमेव,—इति नास्ति विप्रतिपत्तिः, सर्वत्रैवागमे च तथैवाविगीता प्रसिद्धिरिति कथम् 'अष्टात्रिंशदमी तत्त्वा' इत्युपसंहृतम्,—इत्याशङ्क्योक्तं तथैवेति, षट्चक्रमेव षोढा विकस्वर-मित्यर्थः। 'कस विकासे' इत्यस्य हि धातोरयं प्रयोगः। नन्वेवमपि शिव-तत्त्वस्य षोढा विकसितत्वादेकचत्वारिंशत्तत्त्वानि स्युः, षट्त्रिंशदेवेति पुनरपि तदवस्थ एव स दोषः, कथम् 'अष्टात्रिंशत्तत्त्वानि' इति। नैतत्, उक्तनीया हि षट्त्रिंशस्यैव शिवस्य स्वप्रकाशत्वेऽप्युपदेशभावनादौ कल्पिता-यामपि प्रमेयतायां तथाहि 'यादृशो यक्षस्तादृशो वलिरप्यस्य' इतिवत् तादृशेनैव प्रमात्रा भाव्यमिति सप्तत्रिंशं रूपं कल्पितं, तस्याप्येवंरूपताया-मष्टात्रिंशं, तस्याप्येवंरूपतायामनवस्थापरिहाराय पुनः सप्तत्रिंशमेवरूपं प्रमातृत्वेन कल्पितम्,—इति त्रयस्याप्यस्य प्रत्येकं मातृत्वमेयत्वरूपत्वे शिवतत्त्वस्य षट्चक्रत्वं येन 'अष्टात्रिंशत्तत्त्वानि'इत्युपसंहृतम्। नन्वेवमपि 'अष्टात्रिंशत्तत्त्वानि' इति न युज्यते, सप्तत्रिंशस्यापि मेयत्वे कल्पिते षट्त्रिंश एव तथोक्तगत्या प्रमातास्तु किमनवस्थादायिनाष्टात्रिंशेनाप्युपकल्पितेन,—इति चतुश्चक्रमेवास्तु शिवतत्त्वम्। ननूक्त एवात्र परिहारो यावता हि एकस्यैव षट्त्रिंशस्य तत्त्वस्य मायाप्रमात्रपेक्षया विश्वोत्तीर्णत्वेऽपि विश्वमयत्वं प्रमातृत्वेऽपि प्रमेयत्वं च कथं नाम संगच्छताम्,—इत्येतदपास्यं वर्तते। तच्चोभयमपि सप्तत्रिंशाष्टात्रिंशयोरेवोपकल्पनेनोपशाम्यति, द्वयोरपि भिन्न-विषयत्वेनैव कृतार्थत्वस्योक्तत्वात्; आपतन्ती चानवस्था परिह्रियमाणा श्रोतृणां परं सुखावबोधाय स्यात् न संभाव्यमानेत्यप्यष्टात्रिंशस्य परिकल्पने वलवदवलम्बनमित्यास्ताम्। वस्तुतस्तु षट्त्रिंशमेव सर्वसहमित्युक्तप्रायम्। अत एव श्रीप्रत्यभिज्ञाकारादिभिः

'प्रथमस्य तथा भावे प्रद्वेषः किंनिवन्धनः।'

इत्यादि हृदि समाधाय षट्त्रिंशस्यैव शिवस्य न्यायसिद्धं स्वप्रकाशत्वमभ्युप-गम्य नैतत्किंचिदुक्तं, किं त्वियदेवोक्तं यत्

'स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ।
प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत् ॥' ( ई० प्र० १।५।१६ )

इति। ग्रन्थकृता पुनस्तदेव भित्तितयावलम्ब्य तदागमार्थव्याचिकीर्षा-परतयैवमभिहितम्,—इति सर्वं सुस्थम् ॥ २८ ॥

एवमेतत्प्रसङ्गादभिधाय प्रकृतमेवोपक्षेप्तुं न केवलमेभिरेवमखिलं जगद्व्याप्तं यावद्भङ्ग्यन्तरेणापीत्याह

**धरायां गुणतत्वान्ते मायान्ते क्रमशः स्थिताः ।**
**गन्धो रसो रूपमन्तः सूक्ष्मभावक्रमेण तु ॥ २९ ॥**

**इति स्थिते नये शक्तितत्त्वान्तेऽप्यस्ति सौक्ष्म्यभाक् ।**
**स्पर्शः कोऽपि सदा यस्मै योगिनः स्पृहयालवः ॥ ३० ॥**

**तत्स्पर्शान्ते तु संवित्तिः शुद्धचिद्व्योमरूपिणी ।**
**यस्यां रूढः समभ्येति स्वप्रकाशात्मिकां पराम् ॥ ३१ ॥**

'स्पर्शं' इति संचरत्पिपीलिकास्पर्शप्रायः । यदुक्तम्

'शक्तिं भित्त्वा ततो देवि त्वक्शेषे व्यापिनी भवेत् ।
भवेदनुभवस्तत्र स्पर्शो यद्वत्पिपीलिका ॥' (स्व० ४।३८२)

इति। स च 'सौक्ष्म्यभाक्' स्थूलसूक्ष्मान्तरविलक्षणोऽतः कोऽपीत्युक्तम्। अतश्च स एव परमुपेयः, इत्युक्तं 'यस्मै योगिनः स्पृहयालवः' इति। न चायमकाण्डकूष्माण्डन्यायेनात्रावस्थितः,—इत्युक्तम् 'इति स्थिते नये' इति। तेन धरायां गन्धः प्रकृत्यन्ते रसो मायान्ते रूपमित्यन्तः सूक्ष्मेण रूपेण स्थितानीति न्यायमवलम्ब्येत्यर्थः। अत एव चैतदन्ते सर्वभाव-संक्षयात्, 'व्योमरूपिणी शुद्धज्ञानरूपा संवित्तिः' इत्युक्तम्। अत्र च व्योम-रूपत्वोक्त्या शक्त्यन्तादौ गुणगुणिनोरभेदोपचाराद्वाय्वादिरूपत्वं ज्ञेयम्। परामित्यर्थात्संवित्तिम् ॥ ३१ ॥

नन्वेषां भूतगुणत्वाविशेषेऽपि योगिनां स्पर्श एव स्पृहणीयो न रूपादयः,—इत्यत्र किं प्रमाणमित्याशङ्क्याह

**अतो बिन्दुरतो नादो रूपमस्मादतो रसः ।**
**इत्युक्तं क्षोभकत्वेन स्पन्दे स्पर्शस्तु नो तथा ॥ ३२ ॥**

इहोन्मेषादिशब्दव्यपदेश्यपरतत्त्वनिभालनोद्यतानानप्यनुन्मूलितदेहाहं-भाविनां योगिनामचिरात् तत एव विन्दुनादाद्यभिव्यक्तिवत्सिद्धिभूतो रूपादिरपि परतत्त्वासादनविघ्नप्रायत्वात् क्षोभकत्वेन प्रवर्तते न तथा स्पर्शः,—इति श्रीस्पन्दशास्त्रादावुक्तम् । तत्र चास्य

'प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः । ( स्प० ४।१२ )

इति द्वितीयमर्धम् । रूपमन्धकारेऽपि तत्तद्दृश्याकारदर्शनम् । रसवद्वस्तु-विरहेऽपि लोलाग्रादावमृताद्यास्वादः ॥ ३२ ॥

ननु भवत्वेवं स्पर्शस्य स्पृहणीयत्वं को दोषः पृथिव्यादितत्त्वपञ्चकस्य पुनरेवमवस्थाने किं प्रमाणमित्याशङ्क्याह

**मतं चैतन्महेशस्य श्रीपूर्वे यदभाषत ।**
**धारिकाप्यायिनी बोद्ध्री पवित्री चावकाशदा ॥ ३३ ॥**
**एभिः शब्दैर्व्यवहरन् निवृत्यादेर्निजं वपुः ।**

बोद्ध्रीति, तेजसो भास्वरत्वेन दर्शनप्राधान्यात् । पवित्रीति, अधराधरस्य भूतभावादेः संविदात्मकसारसंग्रहणायासारप्रायं जाड्यादिरूपत्वं शिथिलयन्तीत्यर्थः । यदुक्तमनेनैव

'निबिडजडिमबन्धाद्बन्धुरत्वं प्रयातं
शिथिलयति यतः सा ग्रन्थिविस्फोटनेन ।
अधरपदनिविष्टं तेन सा शान्तशक्ति-
प्रसरसरणिरुक्ता तादृशेनैव नाम्ना ॥

इति । 'पूञ् पवने' इत्यस्य ह्ययं प्रयोगः । उत्पूयिनीति त्वेशः पाठः । एभिः शब्दैरिति धरादिरूपत्वं गमयद्भिरित्यर्थः ॥ ३३ ॥

एतदुपसंहरन्नन्यदवतारयति

**पञ्चतत्वविधिः प्रोक्तस्त्रितत्त्वमधुनोच्यते ॥ ३४ ॥**
**विज्ञानाकलपर्यन्तमात्मा विद्येश्वरान्तकम् ।**
**शेषे शिवस्त्रितत्त्वे स्यादेकतत्त्वे शिवः परम् ॥ ३५ ॥**

तदुक्तम्

'विज्ञानाकलपर्यन्तमात्मतत्त्वमुदाहृतम् ।

ईश्वरान्तं च विद्याह्वं शेषं शिवपदं विदुः ॥' (मा० वि० २।४७)

इति । इह चानेन 'एकत्रिपञ्चाद्यैस्तत्त्वकल्पनम्' (त० १।२९६) इत्यनुजोद्देशोद्दिष्टस्यैव तत्त्वकल्पनादेः प्रमेयस्यावकाशो दर्शित इति ॥ ३५ ॥

ननु पृथिव्यादेस्तत्त्वपञ्चकस्याखिलतत्त्वव्यापकत्वेनाभिधानात् तत्त्वाध्वरूपत्वमेव,—इति नास्ति विमतिः, त्रितत्त्वादेः पुनः कलादिवत्किमध्वान्तरत्वमुत तत्त्वाध्वत्वमेवेत्याशङ्क्याह

**इमौ भेदावुभौ तत्त्वभेदमात्रकृताविति ।**
**तत्त्वाध्वैवायमित्थं च न षडध्वस्थितेः क्षतिः ॥ ३६ ॥**

अयमिति समनन्तराह्निकद्वयोक्तः । यतस्तत्तद्व्याप्तिगर्भीकारेण तत्त्वाध्वन एवैतद्भेदवैचित्र्यमिति, अतश्च

...................'षड्विधोऽध्वा प्रकीर्तितः ।'

इत्यादिप्रत्यभिज्ञाया न काचित् खण्डना,—इत्युक्तम्—इत्थं च न षडध्वस्थितेः क्षतिरिति ॥ ३६ ॥

एतदेवान्यत्राप्यतिदिशति

**प्रकृत् पुमान्यतिः कालो माया विद्येशसौशिवौ ।**
**शिवश्च नवतत्त्वेऽपि विधौ तत्त्वाध्वरूपता ॥३७॥**
**एवमष्टादशाख्येऽपि विधौ न्यायं वदेत्सुधीः ।**

उक्तं च

'...................नवतत्त्वीं प्रचक्ष्महे ।'

इत्युपक्रम्य

'प्रकृतिः पुरुषश्चैव नियतिः काल एव च ।
माया विद्या तथेशश्च सदाशिवशिवौ तथा ॥'

इति । न्यायमिति, तत्त्वाध्वरूपतायां साधकमेवेत्यर्थः । तदुक्तम्

'शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
मनो बुद्धिरहंकारो गुणाः प्रकृतिरेव च ॥
पुरुषो नियतिश्चैव कालो माया तथैव च ।

विद्या चैवेश्वरं तत्त्वं सादाख्यं शक्तिगोचरः।
अष्टादशैवं तत्त्वानि.............................. ॥'

इति ॥ ३७ ॥

ननु तत्त्वाद्यध्वनामन्यतमेनैव प्रकारेण दीक्षा सिद्ध्येदिति मूलतः षड्विधत्वमेव किमर्थमुक्तं, तत्राप्यवान्तरवैचित्र्यम्,— इत्याशङ्क्याह

**यत्र यत्र हि भोगेच्छा तत्प्राधान्योपयोगतः ॥ ३८ ॥**
**अन्यान्तर्भावनातश्च दीक्षानन्तविभेदभाक् ।**

अनेके हि दीक्ष्याः—इति तत्तदाशयानुसारं कस्यचिदध्वनः प्राधान्यमितरेषां च गुणभावो येनैवं दीक्षाया अप्यानन्त्यम्। एवं तत्त्वाध्वन्यपि कस्यचित्तत्त्वस्य प्राधान्यं कस्यचिच्च गुणभावो येनैवमनेकभेदत्वं, तथात्वे चैषां न तत्त्वाध्वरूपताप्रच्यावस्तत्त्वभेदमात्रकृतत्वादेवंरूपत्वस्य ॥ ३८ ॥

तदाह

**तेन षट्त्रिंशतो यावदेकतत्त्वविधिर्भवेत् ॥ ३९ ॥**
**तत्त्वाध्वैव स देवेन प्रोक्तो व्याससमासतः ।**

तेनेति, उक्तेन न्यायेन। प्रोक्त इति सर्वत्रागमे। यदुक्तम्

'तत्त्वैः षट्त्रिंशतार्धेन तदर्धेनाथ पञ्चभिः।
स्थितिरेकेन वा कार्या परापरविभूतये॥'

इति ॥ ३९ ॥

ननु

'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।'

इति न्यायेन यद्येकतत्त्वात्मना संक्षिप्तेनैव प्रकारेण दीक्षा सिद्ध्येत् तत्किमन्यैर्विस्तृतैः प्रकारैरित्याशङ्क्याह

**एकतत्त्वविधिश्चैव सुप्रबुद्धं गुरुं प्रति ॥ ४० ॥**
**शिष्यं च गतभोगाशमुदितः शंभुना यतः ।**

गतभोगाशमिति मुमुक्षुमेवेत्यर्थः ॥ ४० ॥

ननु दीक्षया शिवतत्त्वं नामासाद्यम्, इति सर्वत्रोक्तं, तच्चादित एव सिद्धमिति किमनया व्यस्तया समस्तया वेत्याशङ्क्याह

**भेदं विस्फार्य विस्फार्य शक्त्या स्वच्छन्दरूपया ।। ४१ ।।**
**स्वात्मन्यभिन्ने भगवान्नित्यं विश्रमयन् स्थितः ।**

एतदेव परमेश्वरस्य वरं स्वातन्त्र्यं यदेवं भेदमवभासयति च दीक्षादिक्रमेणाद्वयैकपरमार्थे स्वात्मनि च विश्रमयति, इति । यदभिप्रायेणैव प्रागेव

'प्रतिक्षणं विश्वमिदं स्वसंविदि विलापयन् ।
विसृजंश्च ततो भूयः शश्वद्भैरवता व्रजेत् ।।' (तं० ५।३६)

इत्याद्युक्तम् ।। ४१ ।।

इदानीं प्रकृतमेवोपसंहरन्नन्यदवतारयति

**इत्थं त्र्यात्माध्वनो भेदः स्थूलसूक्ष्मपरत्वतः ।। ४२ ।।**
**मेयभागगतः प्रोक्तः पुरतत्त्वकलात्मकः ।**
**अधुना मातृभागस्थं रूपं त्रेधा निरूप्यते ।। ४३ ।।**

प्रोक्त इत्यष्टमाह्निकात्प्रभृति । त्रेधेति पदमन्त्रवर्णगतत्वे स्थूलसूक्ष्मपरत्वेनेत्यर्थः । एतदेव हि वर्णानां परत्वं यत्स्थूलसूक्ष्मौ पदमन्त्रावप्येतद्व्याप्तावेव—इति अत एव चानुजोद्देशोद्दिष्टस्य वर्णभेदक्रमाख्यस्यापि प्रमेयस्यावकाशो दत्तः ।। ४३ ।।

तदाह

**यत्प्रमाणात्मकं रूपमध्वनो मातृभागगम् ।**
**पदं ह्यवगमात्मत्वसमावेशात्तदुच्यते ।। ४४ ।।**
**तदेव च पदं मन्त्रः प्रक्षोभात्प्रच्युतं यदा ।**
**गुप्तभाषी यतो माता तूष्णींभूतो व्यवस्थितः ।। ४५ ।।**

यन्नाम हि प्रमात्रंशाश्रयणेन प्रमाणात्मकं बाहिर्मुख्यात्प्रक्षुब्धमध्वनो रूपं तत्पदमुच्यते तथागमेऽभिधीयत इत्यर्थः । यतः पद्यते ज्ञायतेऽनेनार्थः,—इत्यवगमात्मकं पदम्, अध्वनोऽप्यवगमात्मत्वसमावेशात्,—इत्येव प्रमाणात्मकत्वे हेतुः, प्रकाशावेशमन्तरेण हि प्रकाश्यं नाम न किंचन प्रकाशेतेत्याशयः । यदा च तदेव पदं प्रमाणात्मकाद्रूपात्प्रच्युतमन्तर्मुखत्वादक्षुब्धं रूपमाप्तं तदा प्रमात्रात्मा मन्त्रो, यतोऽसौ प्रक्षोभाभावादौदासीन्येनाव-

स्थानात् 'गुप्तभाषी' अन्तःपरामर्शात्मक इत्यर्थः अत एव 'मन्त्र' इत्यन्वर्थमभिधानमिति भावः ॥ ४५ ॥

नन्वस्य तूष्णींभूतत्वादन्तः परामर्शात्मकत्वे किं प्रमाणमित्याशङ्क्याह

**तथापि न विमर्शात्म रूपं त्यजति तेन सः ।**
**प्रमाणात्मविमर्शात्मा मानवत्क्षोभभाङ्न तु ॥ ४६ ॥**
**मन्त्राणां च पदानां च तेनोक्तं त्रिकशासने ।**
**अभिन्नमेव स्वं रूपं निःस्पन्दक्षोभिते परम् ॥ ४७ ॥**

नह्यसौ तूष्णींभूतत्वेऽपि

'स्वभावमवभासस्य विमर्शं विदुः' (ई० प्र० १।५।११)

इत्याद्युक्तयुक्त्या विमर्शात्मकतां जहाति,—इति प्रमाणवदस्यापि विमर्श एव स्वभावो येनानयोः स्वरूपे न कश्चिद्भेदः । अत एव वक्ष्यमाणगत्या श्रीपूर्वशास्त्रे पदानां मन्त्राणां चैकमेव रूपमुक्तम्; किं त्वयमेवानयोर्विशेषो यन्मानं क्षुब्धं, माता पुनरक्षुब्ध इति । तदुक्तं 'मानवत्क्षोभभाङ्न तु' इति, 'निःस्पन्दक्षोभिते परम्' इति च ॥ ४७ ॥

एवं स्थूलसूक्ष्मभेदेन पदमन्त्राध्वस्वरूपं निरूप्य परत्वेन वर्णाध्वानमपि निरूपयति

**औदासीन्यपरित्यागे प्रक्षोभानवरोहणे ।**
**वर्णाध्वा मातृभागे स्यात् पूर्वं या कथिता प्रमा ॥ ४८ ॥**
**सा तु पूर्णस्वरूपत्वादविभागमयी यतः ।**

इह परिमितप्रमातृदशाधिशायिनीमुदासीनतां परित्यजन्ती प्रमाणसमुचितं क्षुब्धं रूपं चानवरूढा,-- इत्यर्थात्पूर्णतारूपा या प्रमितिः पूर्वमुक्ता सैव प्रमात्रंशाश्रयणेन वर्णाध्वा स्यात्, यदियं दशा स्वात्ममात्रविश्रान्त्या क्षोभोपशमान्मातृमानादिगर्भीकारेण तदविभिन्नस्वभावेत्यर्थः ॥ ४८ ॥

अत एवात्र पदमन्त्रक्रोडीकारसहिष्णुतयैव वर्णाध्वनो निर्देशः,—इत्याह

**तत एकैकवर्णत्वं तत्त्वे तत्त्वे क्षमादितः ॥ ४९ ॥**

**कृत्वा शैवे परे प्रोक्ताः षोडशार्णा विसर्गतः ।**

पूर्णत्वादेव चास्या दशायाः क्षित्यादितत्त्वचतुस्त्रिंशतौ क्षकारात्प्रभृति एकमेव वर्णं योजयित्वा 'परे' पूर्णत्वाद्व्यापकतयाभिमतेऽर्थात् सशक्तिके 'शैवे' शिवाख्ये षट्त्रिंशे तत्त्वे संहारप्रक्रमस्याध्वशुद्धावुचितत्वात् विसर्गादारभ्यानुलोम्येनाकारपर्यन्तं स्वरषोडशकमुक्तम् ।। ४९ ।।

ननु यदि नाम निर्विभागपरिपूर्णसंविदात्मिका सा दशा, कुतस्त्योऽयं विभागः,— इत्याशङ्क्याह

**तत्र शक्तिपरिस्पन्दस्तावान् प्राक् च निरूपितः ।। ५० ।।**

यश्चायं षोढाध्वविभागः स पूर्वस्तच्छक्तिपरिस्पन्द एवेत्युक्तं प्राग्बहुशः । तस्येति संबन्धमात्रे वाच्ये तत्रेति सप्तम्या तद्भित्तिलग्नत्वमेवावेदितम् ।।५०।।

एतदेव संकलयितुं प्रतिजानीते

**संकलय्योच्यते सर्वमधुना सुखसंविदे ।**

सर्वमिति षडध्वजातम् ।।

तदेवाह

**पदमन्त्रवर्णमेकं पुरषोडशकं धरेति च निवृत्तिः ।**
**तत्त्वार्णमग्निनयनं रसशरपुरमस्त्रमन्त्रपदमन्या ।। ५१ ।।**
**मुनितत्त्वार्णं द्विकपदमन्त्रं वस्वक्षिभुवनमपरकला ।**
**अग्न्यर्णदत्त्वमेककपदमन्त्रं सैन्यभुवनमिति तुर्या ।। ५२ ।।**
**षोडश वर्णाः पदमन्त्रतत्त्वमेकं च शान्त्यतीतेयम् ।**
**अभिनवगुप्तेनार्या त्रयमुक्तं संग्रहाय शिष्येभ्यः ।। ५३ ।।**

पदमन्त्रवर्णमिति समाहारः । एकमिति क्षकाररूपम् । पुरषोडशकमिति कालग्न्यादिवीरभद्रान्तम् । भुवनविभागश्चायमष्टमाह्निकान्ते,

> श्रीपूर्वशासने पुनरष्टादशाधिकं शतं कथितम् ।
> तदिह प्रधानमधिकं संक्षेपेणोच्यते शोध्यम् ।।' ( ८।४।३६ )

इत्यादिना सिद्धान्ततयोक्त इति तत एवात्रानुसंधेयः किं तत्संवादनग्रन्थगौरवेण । निवृत्तिरिति, येह धारिकेत्युक्ता । 'अग्नयः' त्रयः 'नयने' द्वे, तेनाबादीन्यव्यक्तान्तानि तत्त्वानि, हादिङान्ता वर्णाश्च त्रयोविंशतिः ।

'रसाः' षट्, 'शराः' पञ्च। एवं षट्पञ्चाशत् पुराणि। 'अस्त्राणि' शराः पञ्च तेन द्वे चतुरक्षरे, त्रीणि पञ्चाक्षराणि, इति पञ्च पदानि मन्त्राश्च। अन्येति, आप्यायिन्यपरपर्याया प्रतिष्ठा। मुनीति सप्त, तेन पुमादिमायान्तानि तत्त्वानि जादिघान्ताश्च वर्णाः। द्विकेति, तेन पञ्चाक्षरमेकं द्व्यक्षरं द्वितीयं चेति पदे मन्त्रौ च। 'वसवः' अष्टौ 'अक्षिणी' द्वे, तेनाष्टाविंशतिर्भुवनानि। अपरकलेति, बोधिन्यपरपर्याया विद्या। 'अग्नयः' त्रयः, तेन गखका वर्णा विद्येश्वरसदाशिवाश्च तत्त्वानि। एककेति तेन त्र्यक्षरं पदं मन्त्रश्च। 'सैन्यानि' अक्षौहिण्योऽष्टादश। तुर्येति, उत्पूयिन्यपरपर्याया शान्ता। षोडशेति, विसर्गाद्यकारान्ताः। स्वरषोडशकात्मकमेवैकं पदं मन्त्रश्च। तत्त्वमिति, शिवाख्यं षट्त्रिंशं, तच्च सशक्तित्वेऽपि प्राधान्यादेकं, शक्तिर्हि न शक्तिमतो भिन्ना भवितुमर्हति,—इति भावः। वस्तुतस्तु व्यापकतयाभिमतं तत्त्वद्वयमेव, यदभिप्रायेणैव श्रीपूर्वशास्त्रे

'षट्त्रिंशत्तत्त्वभेदेन न्यासोऽयं समुदाहृतः।' ( मा० वि० ६।६ )

इत्युक्तम्। शान्त्यतीतायां च भुवनानि न संभवन्ति,—इति नात्र तन्निर्देशः। यदुक्तम्।

'............शान्त्यतीता त्वभुवनैव।' ( ८।४५२ )

इति। एवमप्यधिकृत्य पदवर्णविभागो मन्तव्यः एवमष्टादशोत्तरं शतं भुवनानि, षट्त्रिंशत्तत्त्वानि, पञ्च कलाः, दश पदानि, तावन्त एव मन्त्राः, पञ्चाशद्वर्णाश्चेति षोढाध्वा,—इति पिण्डार्थः। तदुक्तम्

'आद्यं धारिकया व्याप्तं तत्रैकं तत्त्वमिष्यते।
एकमेकं पृथक् क्षार्णं पदार्णमनुषु स्मरेत्॥
कालाग्निभुवनाद्यावद्वीरभद्रपुरोत्तमम्।
पुरषोडशकं ज्ञेयं षड्विधोऽध्वा प्रकीर्तितः।
आप्यायिन्या द्वितीयं च तत्र तत्त्वानि लक्षयेत्।
त्रयोविंशत्यवादीनि तद्वट्टाद्यक्षराणि च।
पदानि पञ्च मन्त्राश्च षट्पञ्चाशत्पुराणि च।
तत्त्वानि सप्त बोधिन्या तच्चतुर्धा पुराणि च॥
तृतीये सप्त वर्णाः स्युः पदमन्त्रद्वयद्वयम्।
उत्पूयिन्या चतुर्थं तु तत्र तत्त्वत्रयं विदुः॥

वर्णत्रयं मन्त्रमेकं पदमेकं च लक्षयेत् ।
अष्टादश विजानीयाद्भुवनानि समासतः ॥
शिवतत्त्वं परं शान्तं कला तत्रावकाशदा ।
स्वरषोडशकं मन्त्रं पदं चैकं विलक्षयेत् ॥
इत्येवं षड्विधोऽप्यध्वा समासात्परिकीर्तितः ।'

(मा० वि० २।५७)

इति । अभिनवगुप्तेति स्वनामोदीरणस्यायमाशयो—यदेतावत्प्रमेयजातं विस्तरीतुमिव संग्रहीतुमप्यनन्यसाधारणं ममैव परं प्रावीण्यमिति ॥ ५३ ॥

ननु पारमेश्वरः शक्तिपरिस्पन्द एव षोढाध्वा इति प्राङ्निरूपितं, तत्कथमिदानीं तत्त्वभुवनादितया बहीरूपत्वेनापि तस्य स्वरूपमुक्तम्,—इत्याशङ्क्याह

**सोऽयं समस्त एवाध्वा भैरवाभेदवृत्तिमान् ।**
**तत्स्वातन्त्र्यात्स्वतन्त्रत्वमश्नुवानोऽवभासते ॥ ५४ ॥**

यद्यपि वस्तुतः समस्तोऽयमध्वा पूर्णप्रकाशाभिन्न एव तथापि तदिच्छयैव तदतिरिक्तायमानतया स्वातन्त्र्येण प्रस्फुरेद् येनास्य बहीरूपतयावभासः ॥ ५४ ॥

ननु कलाद्यध्वा मेयभागगतत्वाद्बहिः स्वातन्त्र्येणावभासतां नाम, मन्त्राद्यध्वा पुनः प्रमातृभागगतः—इति कथमस्य तथाभावः स्यादित्याशङ्क्याह

**तथाहि मातृरूपस्थो मन्त्राध्वेति निरूपितः ।**

मन्त्राद्यध्वा हि प्रमातृभागगतोऽपि तथा स्वतन्त्र एव,—इत्येवं समस्त एवाध्वायमविशेषेण निरूपितः समनन्तरमेवोक्त इत्यर्थः ॥

नन्वयं मन्त्राद्यध्वा प्रमातृभागगतश्च स्वातन्त्र्येणावभासेत चेति विप्रतिषिद्धमेतत्,—इत्याशङ्क्यैतदेवोपपादयति

**तथाहि चिद्विमर्शेन ग्रस्ता वाच्यदशा यदा ॥ ५५ ॥**
**शिवज्ञानक्रियायत्तमननत्राणतत्परा ।**
**अशेषशक्तिपटलीलीलालाम्पट्यपाटवात् ॥ ५६ ॥**
**च्युता मानमयाद्रूपात् संविन्मन्त्राध्वतां गता ।**

यदा हि चेतनव्यापारमयप्रमाणरूपेण विमर्शनेन बाह्यमर्थजातं स्वात्मसात्कृतं तदा निखिलस्य चक्षुरादीन्द्रियवृत्तिस्वभावस्य शक्तिनिकुरम्बकस्य या 'लीला' बहिःप्रसरणं तत्र 'लाम्पट्यात्' औत्सुक्यात् यदौन्मुख्यात्मकं पाटवमेवंविधात् क्षुब्धान्मानमयाद्रूपादवरूढा, अत एव शिवस्य

'विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः ।' ( ई० प्र० १।८।११)

इत्यादिनीत्या स्वातन्त्र्यमात्ररूपयोर्ज्ञानक्रिययोरायत्तं तदेकपरमार्थं यन्मननमिदमिति परामर्शः, तथा त्राणमिदंपरामर्शविश्रान्तिभूरहन्तापरामर्शस्तत्र तत्परा बहिरौन्मुख्यविरमात्तदेकविश्रान्ता संकुचितप्रमातृरूपा संविन्मन्त्राध्वतां गता तन्मयतया प्रस्फुरितेत्यर्थः ॥ ५६ ॥

द्विविधं हि संविदः परिस्फुरणं क्षुब्धमक्षुब्धं च । तत्राक्षुब्धतायामस्याः प्रमातृत्वे मन्त्राध्वत्वम्, अन्यथा पुनः प्रमाणत्वे पदाध्वत्वम्, तदाह

**प्रमाणरूपतामेत्य प्रयात्यध्वा पदात्मताम् ॥ ५७ ॥**

एतदेवोपपादयति

**तथा हि मातुर्विश्रान्तिर्वर्णान्संघट्य तान्बहून् ।**

प्रमाता हि वदकषादीननेकान्वर्णान् संक्षोभ्य तत्तत्पदनिष्पत्त्या तं तमर्थमधिगच्छेत् येनास्य स्वात्मनि क्षोभोपरमः स्यात् ॥

ननु संघट्टने वर्णानामेव क्षोभः स्यान्न प्रमातुरिति कस्तस्य तदुपरमार्थः,—इत्याशङ्क्याह

**संघट्टनं च क्रमिकं संजल्पात्मकमेव तत् ॥ ५८ ॥**

**विकल्पस्य स्वकं रूपं भोगावेशमयं स्फुटम् ।**

**अतः प्रमाणतारूपं पदमस्मद्गुरुर्जगौ ॥ ५९ ॥**

क्रमिकमिति पूर्वापररूपत्वाद्वाचः, अत एव 'तत्पूर्वजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः' इति भङ्ग्या संधाय जल्पनात्संजल्पात्मकमित्युक्तम् । विनानुसंधानमेव पदसंपत्त्यभावात् क्रमिकैर्वर्णैः क इवार्थाधिगमो भवेदिति भावः । एतदेव च 'शब्दसंसर्गयोग्यार्थप्रतीतिः कल्पना' इत्यादिनीत्या विकल्पस्य तात्त्विकं रूपमित्याह विकल्पस्य स्वकं रूपमिति । नन्वेवमपि प्रमातुः कः क्षोभः,—इत्याशङ्क्याह स्फुटं भोगावेशमयमिति, तत्तदर्थानुभवोदितसुखदुःखादिवेदनात्मकमित्यर्थः । 'अतः' इति भोगावेशमयत्वेन प्रमातृक्षोभरूपत्वात् ॥

इह वाचकतया साजात्येन वर्णाध्वनः प्रसङ्गेऽपि

'ज्ञानं न जायते किंचिदुपष्टम्भनवर्जितम् ।'

इत्यादिनीत्या प्रमेयमन्तरेण प्रमाणतैव न भवेत्,—इत्येतदानन्तर्येण प्रमेयभागस्थं कलाद्यध्वत्रयमभिधत्ते । तत्रापि मेयस्य मानरूपतावेशे कलाध्वत्वम्, अन्यथा तु सूक्ष्मत्वे स्थूलत्वे च तत्त्वाध्वत्वं भुवनाध्वत्वं चेत्याह

**प्रमाणरूपतावेशमपरित्यज्य मेयताम् ॥ ६० ॥**
**गच्छन्कलनया योगादध्वा प्रोक्तः कलात्मकः ।**
**शुद्धे प्रमेयतायोगे सूक्ष्मस्थूलत्वभागिनी ॥ ६१ ॥**
**तत्त्वाध्वभुवनाध्वत्वे क्रमेणानुसरेद्गुरुः ।**

कलनयेति, कलना हि विकल्पनं तदेव च प्रमाणसतत्त्वम्,—इत्युक्तं प्राग्बहुशः । 'शुद्ध' इति प्रमाणतावेशशून्य इत्यर्थः ॥ ६१ ॥

एवं प्रमातृप्रमाणप्रमेयानन्तरं तत्संबन्धनिबन्धनं प्रमाणफलरूपं वर्णाध्वानं वक्तुमुपक्रमते

**प्रमेयमानमातृणां यद्रूपमुपरि स्थितम् ॥ ६२ ॥**
**प्रमात्मात्र स्थितोऽध्वायं वर्णात्मा दृश्यतां किल ।**

उपरिस्थितमिति, प्रमेयादीनां त्रयाणामपि विश्रान्तिधामेत्यर्थः ॥ ६२ ॥

तदेवाह

**उच्छलत्संविदामात्रविश्रान्त्यास्वादयोगिनः ॥ ६३ ॥**
**सर्वाभिधानसामर्थ्यादनियन्त्रितशक्तयः ।**
**सृष्टाः स्वात्मसहोत्थेऽर्थे धरापर्यन्तभागिनि ॥ ६४ ॥**
**अमृशन्तः स्वचिद्भूमौ तावतोऽर्थानभेदतः ।**
**वर्णौघास्ते प्रमारूपां सत्यां बिभ्रति संविदम् ॥ ६५ ॥**

इह खलु

'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ ( वा० प० )

इत्यादिनीत्या क्रमस्यानुन्मीलनात्परस्परमनासादितविभागवर्णौघा भगवता स्वचिद्भूमौ पश्यन्त्यात्मनि शुद्धविद्यादशायां मायादिधरान्ते स्वाविभिन्ने वाच्यरूपतत्तत्तत्त्वाद्यात्मन्यर्थे सति तावतो धरान्तानेवार्थानभेदेनामृशन्तोऽहन्ताच्छादितेदन्तापरामर्शसाराः सन्तः 'सृष्टाः' समुल्लासिता इत्यर्थः। नन्वेषां प्रतिनियतार्थविषयमेव वाचकत्वं दृश्यते न सर्वार्थविषयमिति किमेतदुक्तम्,—इत्याशङ्क्याह सर्वाभिधानेत्यादि। यदभिप्रायेण वैयाकरणैरपि 'सर्वः शब्दः सर्वार्थप्रतिपादनशक्तियुक्त' इत्याद्युक्तम्। सर्वाभिधानसामर्थ्येऽपि किं निमित्तमित्युक्तम् उच्छलदित्यादि। परस्यां हि संविदि सर्वभावनिर्भरत्वात्सर्वमस्ति,—इत्यभिप्रायः। त एव च वर्णाः प्रमारूपां प्रमात्रादित्रयविश्रान्तिमयीं पारमार्थिकीं संविदं 'बिभ्रति' पुष्णन्ति तन्मयतयैव प्रस्फुरन्तीत्यर्थः ॥ ६५ ॥

ननु शब्दार्थव्युत्पत्तिबालिशानां बालादीनामपि संभवत्येव प्रमेति कथमेतदुक्तं 'वर्णा एव बिभ्रति,—इत्याशङ्क्याह

**बालास्तिर्यक्प्रमातारो येऽप्यसंकेतभागिनः।**
**तेऽप्यकृत्रिमसंस्कारसारामेनां स्वसंविदम् ॥ ६६ ॥**
**भिन्नभिन्नामुपाश्रित्य यान्ति चित्रां प्रमातृताम्।**

अकृत्रिमसंस्कारसारामिति, स्वारसिकपरामर्शपरमार्थामित्यर्थः। ननु चिदेकस्वभावनिर्विभागसहजपरामर्शसारप्रमाश्रयणे बालतिर्यगादीनामव्युत्पत्तिविशेषेऽपि कथंकारं परस्परं प्रमातृतायां वैचित्र्यं स्यात्,—इत्याशङ्क्योक्तं भिन्नभिन्नामिति, स्वस्वातन्त्र्यमायानुवेध्रोपरतसंकोचामित्यर्थः। [ यदुक्तम् ]

व्यवहाराः प्रतायन्ते तिरश्चामपि तद्वशात्।

इति ॥ ६६ ॥

न केवलमियमसंकेतभाजां बालादीनामेव विचित्रायां प्रमातृतायां निबन्धनं यावत्संकेतभाजां व्युत्पन्नानामपीत्याह

**आस्यां चाकृत्रिमानन्तवर्णसंविदि रूढताम् ॥ ६७ ॥**
**संकेता यान्ति चेत्तेऽपि यान्त्यसंकेतवृत्तिताम्।**

अस्यां समनन्तरोक्तस्वरूपायामकृत्रिमा स्वयमगृहीतसंकोचात एवानन्ता येयं वर्णसंवित् तस्यां विमर्शशक्तिसारायामावापोद्वापपरिगृहीतान्वयव्यतिरेकहेतुकाः शब्दार्थसंयोजनात्मानः 'संकेता अपि रूढतां' विश्रान्ति यदा यान्ति तदा ते संकेता एवासंकेतवृत्तितां यान्ति ।

'शब्दे वाचकशक्तिश्च नित्यैवाग्नाविवोष्णता ।'

इत्यादिनीत्या संकेतसमयविलक्षणविमर्शसारशक्तिरूपसंबन्धात्मकतया वस्तुस्पृशो भवन्तीत्यर्थः । अपिर्भिन्नक्रमः ॥ ६७ ॥

एतदेव व्यतिरेकद्वारेणाप्युपपादयति

**अनया तु विना सर्वे संकेता बहुशः कृताः ॥ ६८ ॥**

**अविश्रान्ततया कुर्युरनवस्थां दुरुत्तराम् ।**

**बालो व्युत्पाद्यते येन तत्र संकेतमार्गणात् ॥ ६९ ॥**

अनया समन्तरोक्तया संविद्रूढतया विना हि विश्रान्तिमलभमाना बहुशः कृता अपि 'वृक्षस्तरुः शाखी'इत्यादयः सर्वे संकेताः 'शब्दैरेव शब्दान् व्याचष्टे' इति भङ्ग्या दुरुत्तरामनवस्थां कुर्युः, संकेतान्तरमार्गणं न विरमेदित्यर्थः । यतो येन येन संकेतेन बालो व्युत्पाद्यते तत्र 'को वृक्षस्तरुः शाखी' इत्यादिवत्संकेतान्तरं मृग्यत एवेति ॥ ६९ ॥

नन्वस्य किं संकेतान्तरमार्गणेनाङ्गुल्यादिनिर्देशेन व्युत्पत्तिर्भविष्यतीत्याशङ्क्याह

**अङ्गुल्यादेशनेऽप्यस्य नाविकल्पा तथा मतिः ।**

**विकल्पः शब्दमूलश्च शब्दः संकेतजीवितः ॥ ७० ॥**

अस्य व्युत्पाद्यमानस्य बालादेः 'घटोऽयम्' इत्यङ्गुल्या निर्दिश्यमाने पुरोवर्तिन्यर्थे तथा वाच्यवाचकभावलक्षणा मतिर्घटशब्दवाच्योऽयमिति शब्दानुवेधादविकल्पा तावन्न भवेत् ।

'अथ चेतसविकल्पा तद्विकल्पाः शब्दयोनयः ।'

इत्यादिनीत्या विकल्पस्तावच्छब्दमूलः शब्दश्च संकेतैकपरमार्थः,—इति संकेतान्तरापेक्षायामनवस्थावश्यमापतेत् ॥ ७० ॥

अतश्च संवित्परामर्शसारः शुद्धविद्यात्मा संकेतानपेक्षो वर्णग्राम एव विश्रान्तिस्थानतयाभ्युपगन्तव्यो येनानवस्था शाम्येदित्याह

**तेनानन्तो ह्यमायीयो यो वर्णग्राम ईदृशः ।**
**संविद्विमर्शसचिवः सदैव स हि जृम्भते ।। ७१ ।।**

'ईदृशः' इति संकेतादिनिरपेक्षः । सदैवेति, कृत्रिममायीयवर्णव्यवहरणावसरेऽपीत्यर्थः । इह हि या काचन प्रमा समुल्लसति तत्रावश्यमिदमित्थमिति वर्णसंभेदेन भाव्यमिति भावः ।। ७१ ।।

ननु प्रमासु प्रतिषिद्धा एव मायीया वर्णाः संभेदकतयावभासन्ते,—इति किं नाम मायीयैरलौकिकैर्वर्णैः प्रयोजनमित्याशङ्क्याह

**यत एव च मायीया वर्णाः सूतिं वितेनिरे ।**
**ये च मायीयवर्णेषु वीर्यत्वेन निरूपिताः ।। ७२ ।।**
**संकेतनिरपेक्षास्ते प्रमेति परिगृह्यताम् ।**

निरूपिता इति, श्रीपूर्वशास्त्रादौ । यदुक्तं तत्र

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।'

इत्यादि पीठिकाबन्धं कृत्वा

'तत्र तावत्समापन्ना मातृभावं विभिद्यते ।'

इत्याद्युपक्रम्य

'स तया संप्रबुद्धः सन्योनिं विक्षोभ्य शक्तिभिः ।
तत्समानश्रुतीन् वर्णांस्तत्संख्यानसृजत् प्रभुः ।।
तैस्तैरालिङ्गिताः सन्तः सर्वकामफलप्रदाः ।
भवन्ति साधकेन्द्राणां नान्यथा वीरवन्दिते ।।' (मा० वि० ३।२८)

इति । 'ते' इत्यमायीया वर्णाः । परिगृह्यतामिति, अन्यथा हि प्रागुक्तवदनवस्थोपनिपातात्प्रमोत्पाद एव न स्यात्,—इत्यनेन मूकप्रायं विश्वं भवेदिति भावः ।। ७२ ।।

एतदेव निदर्शयति

**तथा हि परवाक्येषु श्रुतेष्वाम्रियते निजा ।। ७३ ।।**

**प्रमा यस्य; जडोऽसौ नो तत्रार्थेऽभ्येति ज्ञातृताम् ।**

श्रुतेष्वपि हि परवाक्येषु यस्य तद्विषया निजा प्रमाव्रियते आवृता भवति, अनवधानादिना परवाक्याद्यवगन्तुं नोत्सहते; अत एव स जडस्तत्रार्थे प्रमातृतां नाभ्येति, तदर्थाधिगन्ता न भवेदित्यर्थः ॥ ७३ ॥

नन्वस्य परवाक्यादौ तत्पाठान्यथानुपपत्त्यास्त्येवागमः,— इति किं नाम सुप्रमाणमित्याशङ्क्याह

**शुकवत्स पठत्येव परं तत्क्रमितैकभाक् ॥ ७४ ॥**

**स्वातन्त्र्यलाभतः स्वाक्यप्रमालाभे तु बोद्धृता ।**

स खल्वावृतप्रमितिर्जडस्तेषां परवाक्यानां क्रमिकतामेवैकां भजमानः शुकवदर्थात् परवाक्यादि पठत्येव, केवलं तद्विषया बोद्धृता पुनरस्य स्वकैव स्वाक्या येयं प्रमा तस्या लाभे सति, तत्रैव कर्तृतात्मनः स्वातन्त्र्यस्य लाभाद्भवेदिति वाक्यशेषः ॥ ७४ ॥

न केवलमस्यैवं प्रमालाभे परकीय एव वाक्यादौ बोद्धृत्वं भवेद्यावत्स्वकीयेऽपि कर्तृत्वमित्याह

**यस्य हि स्वप्रमाबोधो विपक्षोद्भेदनिग्रहात् ॥ ७५ ॥**

**वाक्यादिवर्णपुञ्जे स्वे स प्रमाता वशीभवेत् ।**

यस्य हि प्रमातुरनवधानाद्यात्मनां 'विपक्षाणामुद्भेदस्य' प्रथमोल्लासस्यापि 'निग्रहात्' उन्मूलनात् स्वप्रमा प्रबुद्धा भवेत् स स्वे महावाक्यादिरूपे वर्णपुञ्जे वशीभवेत्, स्वयमपि तत्तद्वर्णारब्धं वाक्यादि निर्मातुं स्वतन्त्रः स्यादित्यर्थः ॥ ७५ ॥

ननु यद्येवं तत्प्रमाबोधस्याविशेषेऽपि कस्मात् केचित्प्रमातारो वाक्याद्येव कुर्वते परे शास्त्राद्यपि,—इत्याशङ्क्याह

**यथा यथा चाकृतकं तद्रूपमतिरिच्यते ॥ ७६ ॥**

**तथा तथा चमत्कारतारतम्यं विभाव्यते ।**

तद्रूपमिति, तच्छब्देन प्रमाबोधपरामर्शः चमत्कारेति, उत्तरोत्तरं वाक्यादिनिर्माणकर्तृतातिशय इत्यर्थः ॥ ७६ ॥

ननु च प्रमा नामानवच्छिन्नसहजपरामर्शमयी,—इति तस्याः प्रबोधः सर्वतोमुख एव भवेन्नांशांशिकया,—इति कथमुक्तं 'यथायथं तद्रूपमतिरिच्यते' इतीत्याशङ्क्याह

**आद्यामायीयवर्णान्तर्निमग्ने चोत्तरोत्तरे ॥ ७७ ॥**
**संकेते पूर्वपूर्वांशमज्जने प्रतिभाभिदः ।**

इह खलु बालादीनां प्रथमसंकेतादारभ्य यथापूर्वंनिवेशिनि संविद्विमर्शबाह्यप्रसराभिप्रायेणोत्तरोत्तरे संकेते तदन्तर्विश्रान्त्यभिप्रायेण पूर्वस्मिन्पूर्वस्मिन्संकेतात्मन्यंशेऽर्थादुत्तरोत्तरस्य 'मज्जने' तादात्म्ये सति, आद्यानां निखिलसंकोचविश्रान्तिभूतानां शुद्धविद्यात्मनां वर्णानामन्तः स्वात्मनि निःशेषेण 'मग्ने' तदेकमयतामापन्ने 'प्रतिभायाः प्रमाप्रबोधस्य 'भिदो' विशेषास्तारतम्यरूपं वैचित्र्यमित्यर्थः ॥ ७७ ॥

अत एव सर्वतोमुखं कवित्वं वक्तृत्वादावप्रतिहतः प्रसरोऽपि कदाचिद्भवेदित्याह

**आद्योद्रेकमहत्त्वेऽपि प्रतिभात्मनि निष्ठिताः ॥ ७८ ॥**
**ध्रुवं कवित्ववक्तृत्वशालितां यान्ति सर्वतः ।**

'आद्योद्रेकमहत्त्वे' इति, 'आद्येन' प्राथमिकेन 'उद्रेकेण' उच्छलत्तया महत्त्वं यस्य तस्मिन् परसंविद्धामसविधवर्तिनीत्यर्थः ॥ ७८ ॥

परधाराधिरोहे पुनः सर्वज्ञानक्रियायोग एव स्यादित्याह

**यावद्धामनि संकेतनिकारकलनोज्झिते ॥ ७९ ॥**
**विश्रान्तश्चिन्मये किं किं न वेत्ति कुरुते न वा ।**

अतश्चागमोऽप्येवमित्याह

**अत एव हि वाक्सिद्धौ वर्णानां समुपास्यता ॥ ८० ॥**
**सर्वज्ञत्वादिसिद्धौ वा का सिद्धिर्या न तन्मयी ।**

अतः परामर्शसारत्वादेव वर्णानां वाक्सिद्धिनिमित्तं विद्येश्वरत्वाद्यापत्तिनिमित्तं च समुपास्यता श्रीपूर्वशास्त्रादावुक्तेत्यर्थः । यदुक्तं तत्र

'भूयोऽपि समुदायेन वर्णभेदश्च कीर्त्यते ।
स्त्रीरूपां हृदि संचिन्त्य सितवस्त्रादिभूषिताम् ॥
नाभिचक्रोपविष्टां तु चन्द्रकोटिसमप्रभाम् ।
बीजं यत्सर्वशास्त्राणां तत्तदा स्यादनारतम् ॥
स्वकीयेनैव वक्त्रेण निर्गच्छत्प्रविचिन्तयेत् ।
तारहारलताकारं विस्फुरत्किरणाकुलम् ॥
वर्णैस्तारकसंकाशैरारब्धममितद्युति ।
मासाद्यच्छास्त्रसंघातमुद्गिरप्यनिवारितम् ॥
स्वप्ने मासात्समाधिस्थः षड्भिर्मासैर्यथेच्छया ।
उच्छिन्नान्यपि शास्त्राणि ग्रन्थतश्चार्थतोऽपि च ॥
जानाति वत्सराद्योगी यदि चिन्मयतां गतः ।
अनुषङ्गफलं चैतत्समासादुपवर्णितम् ॥
विद्येश्वरसमानत्वसिद्धिरन्याश्च सिद्धयः ।' (मा० वि० १९।५५)

इति । आदिशब्दाद्वश्यादिसिद्धिस्वीकारः । तदुक्तं तत्र

'अथवा योजयेत्कश्चिदेनां वश्यादिकर्मसु ।
तदा प्रसाधयत्याशु साधकस्य समीहितम् ॥
उदितादित्यवर्णानां [भां] समस्ताक्षरपद्धतिम् ।' (मा० वि० १०।६१)

इति । ननु समुपास्यमानानां वर्णानां वाक्सिद्ध्यादिनिमित्तत्वमुचितम्,—इत्यास्तामेतत्, वश्यादिसिद्धिसाधकत्वं पुनरेषां कथंकारं संगच्छताम्,—इत्याशङ्क्योक्तं का सिद्धिर्या न तन्मयीति ॥ ८० ॥

अत एव च

'ये च मायीयवर्णेषु वीर्यत्वेन निरूपिताः ।' (तं० ११।७३)

इत्यादिनीत्या मायीयवर्णानां परामर्शमात्रसारा एते वर्णा वीर्यत्वेनावश्यमुपगतव्याः, अन्यथा हि ते लिपिसंनिवेशकल्पा न कांचन सिद्धिं विदध्युरित्यागमसंवादेन द्रढयति

**तदुक्तं वरदेन श्रीसिद्धयोगीश्वरीमते ॥ ८१ ॥**
**तेन गुप्तेन गुप्तास्ते शेषा वर्णास्त्विति स्फुटम् ।**

तदेवाह तेनेत्यादि । तेनेति, संवित्परामर्शमात्ररूपेण वीर्येणेत्यर्थः । 'गुप्ताः' इति प्रच्छन्ननिजात्मानः । तदुक्तं तत्र

'दृष्ट्वा संस्कारविरहं मनुजानां समन्ततः ।
विभेदं समयानां च कृतवन्तो नराधमाः ॥
सर्वेषामेव मन्त्राणामतो वीर्यं प्रगोपितम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥
गुप्तवीर्या महादेवि विधिनापि प्रयोजिताः ।
तेनैते न प्रसिद्धयन्ति जप्ताः कोटिशतैरपि ॥'

इति ॥ ८१ ॥

तदेवोपसंहरति

**एवं मामातृमानत्वमेयत्वैर्योऽवभासते ॥ ८२ ॥**
**षड्विधः स्ववपुःशुद्धौ शुद्धिं सोऽध्वाधिगच्छति ।**

स्ववपुःशुद्धाविति,'स्वस्य' असाधारणस्य कलाद्यात्मनः स्वरूपस्य 'शुद्धौ' भोगासङ्गमालिन्यविनिवृत्तावित्यर्थः ॥ ८२ ॥

ननु यद्येवं तत्प्रतिदीक्ष्यं साक्षात्षड्विधोऽप्यध्वा किं शोध्य उत न,—इत्याशङ्क्याह

**एकेन वपुषा शुद्धौ तत्रैवान्यप्रकारताम् ॥ ८३ ॥**
**अन्तर्भाव्याचरेच्छुद्धिमनुसंधानवान् गुरुः ।**

एकेनेति कलादिमध्यादन्यतमेन । शुद्धाविति कर्तव्यायाम् ॥ ८३ ॥

एवमप्यशक्तौ क्रमान्तरमस्ति,—इत्याह

**अनन्तर्भावशक्तौ तु सूक्ष्मं सूक्ष्मं तु शोधयेत् ॥ ८४ ॥**
**तद्विशुद्धं बीजभावात् सूते नोत्तरसंततिम् ।**

सूक्ष्ममिति, पेलवं कारणमित्यर्थः । यथा वाचकाध्वनो वर्णाः, वाच्याध्वनश्च कलाः ॥ ८४ ॥

ननु शोध्यस्य षड्विधस्याप्यध्वनः का नाम शुद्धिरित्याशङ्क्याह

**शोधनं बहुधा तत्तद्भोगप्राप्त्येकतानता ॥ ८५ ॥**
**तदाधिपत्यं तत्त्यागस्तच्छिवात्मत्ववेदनम् ।**
**तल्लीनता तन्निरासः सर्वं चैतत्क्रमाक्रमात् ॥ ८६ ॥**

तत्तद्भोगप्राप्त्येकतानतेति तस्य तस्य दीक्ष्य तथा संमतस्य अणोः

'अर्जिते सति भोक्तव्यो भोगो दुःखसुखात्मकः ।' (स्व० ४।१२०)

इत्यादिनीत्या प्राक्कर्मार्जितस्य सुखदुःखात्मनो भोगस्य या 'प्राप्ति'र्भोग्यता तत्रैकतानता

'प्राक्कर्मवासनाशेषफलभोग्यत्वहेतवे ।' (स्व० ४।११४)

इति । तथा

'भिन्नदेहा विसृज्यन्ते गर्भे वागीशियोनिषु ।' (स्व० ४।११५)

इत्यादिनीत्या तद्भोग्यत्वसंपत्तये तत्तद्देहसृष्टिद्वारेण जन्मपरिग्रहे दार्ढ्य-मित्यर्थः । तदाधिपत्यमिति, तस्य दीक्ष्यस्वाणोर्भोगे 'आधिपत्यम्' अधिकारः । तत्त्याग इति, तस्याणोर्भोगविषयः 'त्यागः' समाप्तिरूपभोगद्वारेण निःशेषीकरणात्मा निष्कृतिः । यदुक्तम्

'विषया भुवनाकारा ये केचिद्भोग्यरूपिणः ।
भुक्तकर्मफलाशेषा निष्कृतिस्तेन सा स्मृता ।।' (स्व० ४।१२५)

इति । तच्छिवात्मत्ववेदनमिति, तस्याणोः

'शुद्धतत्त्वाग्रसंस्थं तच्चैतन्यं कनकप्रभम् ।' (स्व० ४।१३३)

इत्याद्युक्त्या तत्तदावरणविगमाच्छ्रेयोरूपं निर्मलात्मत्वेन 'वेदनम्' अस्य शोधितादधस्तनादध्वन उद्धार इत्यर्थः । तल्लीनतेति, तस्य भोगे लीनता परप्रीत्यात्मविश्रान्तिसतत्त्वो लयः । यदुक्तम्

'लयः परमया प्रीत्या सुखदुःखात्मकेऽप्यलम् ।' (स्व० ४।१२०)

इति । तन्निरास इति, तस्य भोगान्निरासः पुनर्भोगैरसंबन्धो भोक्तृत्वा-भावात्मा विश्लेषः । यदुक्तम्

'विश्लेषो निष्कृतिर्भोगाद्भोगाभावे स हि स्मृतः ।' (स्व० ४।१२६)

इति । अत्र च शुद्धिस्वरूपमात्राभिधित्सया क्रमो न विवक्षितः,—इत्येव-मेषामभिधानम् । तदेतज्जन्माधिकारभोगलयनिष्कृतिविशे(श्ले)षोद्धारादि-लक्षणं सर्वं शोधनसमाख्यातं संस्कारजातं श्रीमत्स्वच्छन्दशास्त्राद्युक्तरूपात् क्रमाद्भवेत् । तीव्रतीव्रशक्तिपातवतां च

'जननादिविहीनां तु येन येनाध्वना गुरुः ।
कुर्यात्स एकतत्त्वान्तां................ ॥' (१८।२)

इत्यादिवक्ष्यमाणस्वपादकमोद्वेति ॥ ८६ ॥

ननु चैतत्सर्वं किममन्त्रकं कार्यमुत समन्त्रकं, तत्राप्यमन्त्रकत्वे छात्रमनोरथप्रायत्वान्न किंचित् सिद्धयेत्,—इति यत्किंचिदेतत् स्यात् । समन्त्रकत्वे पुनरचिन्त्या मन्त्रशक्तिरचिन्त्यप्रभावत्वादनायासमक्रमेणैव सर्वसंपत्तिरस्तु किं क्रमेण येन

'गर्भेषु गर्भनिष्पत्ति भैरवेणाहुतित्रयम् ।
हुत्वा तु जननं कार्यं पुनस्तेनाहुतित्रयात् ॥' (स्व० ४।११८)

इति । तथा

'विश्लेषश्च हृदा होम्यो निष्कृतिः शिरसा पुनः ।' (स्व० ४।१६४)

इत्याद्युक्तमित्याशङ्क्याह

**अत एव च ते मन्त्राः शोधकाश्चित्ररूपिणः ।**
**सिद्धान्तवामदक्षादौ चित्रां शुद्धिं वितन्वते ॥ ८७ ॥**

अतो जन्मादेः संस्कारजातस्य क्रमेणाक्रमेण च भावादेव सिद्धान्तादावुक्तास्ते हृदाद्याः प्रतिनियतशुद्धिकारित्वाच्चित्ररूपिणः शोधका मन्त्रः 'चित्रां' जन्मादिरूपतया नानाविधां क्रमिकीमेव शुद्धिमादध्युस्तत्के पुनरक्रमिकीमित्याशङ्क्याह

**अनुत्तरत्रिकानामक्रममन्त्रास्तु ये किल ।**
**ते सर्वे सर्वदाः किन्तु कस्यचित् क्वापि मुख्यता ॥ ८८ ॥**

ये पुनरनुत्तरत्रिकार्थरूपे सिद्धानामकमालिन्याख्ये त्रिप्रकारे क्रमे मन्त्रा उक्तास्ते किल सर्व एव न तु शास्त्रान्तरोक्तवन्मूलमन्त्राद्येव सर्वदा सर्वमिव शुद्धिं क्रमादक्रमाद्वा दध[द]तीत्यर्थः । ननु यद्येवं तत्कथं तत्रापि मन्त्राणाम्

कृत्वात्मस्थं ततो यौनो गर्भाधानं विचिन्तयेत् ।
त्र्यर्णाधिक्षरया मन्त्री सर्वगर्भक्रियान्वितम् ॥' (मा० वि० ९।६०)

इत्याद्युक्त्या नियतकर्मविषयत्वमुक्तम्,—इत्याशङ्क्याह किंतु क्वापि कस्यापि मुख्यतेति । यदभिप्रायेणैव श्रीपूर्वशास्त्रे

'मायान्तमार्गसंशुद्धौ दीक्षाकर्मणि सर्वतः ।
क्रियास्वनुक्तमन्त्रासु योजयेदपरां बुधः ।।
विद्यादिसकलान्ते च तद्वदेव परापराम् ।
योजयेन्नेश्वरादूर्ध्वं पिबन्यादिकमष्टकम् ।।
न चापि सकलादूर्ध्वमङ्गषट्कं विचक्षणः ।
निष्कले परया कार्यं यत्किंचिद्विधिचोदितम् ।।' (मा० वि० ९।७१)

इत्याद्युक्तम् ।। ८८ ।।

अत एवात्र सर्वेषामेव मन्त्रणामध्वनि शोधकतया व्यवस्थितिरुक्ता,—इत्याह

**अतः शोधकभावेन शास्त्रे श्रीपूर्वसंज्ञिते ।**
**परापरादिमन्त्राणामध्वन्युक्ता व्यवस्थितिः ।। ८९ ।।**

'अत' इति सर्वेषां त्रिकमन्त्राणां सर्वदत्वात् । शोधकभावेनेति, नतु शास्त्रान्तरोक्तवच्छोध्यत्वेनापीति । तदुक्तं तत्र

'निष्कले पदमेकार्णं त्र्यर्णंकार्णमथ द्वयम् ।' (मा० वि० ४।१९)

इत्यादि

'सार्णेनाण्डत्रयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण पराया व्याप्तिरिष्यते ।।' (मा० वि० ४।२५)

इत्यन्तम् ।। ८९ ।।

ननु यथान्यत्र मूलमन्त्रस्यैव शोधकत्वमुक्तमन्येषां हृदादीनां पुनः शोध्यत्वं शोधकत्वं च तद्वदिहापि शक्तित्रयमन्त्राणामेव किं शोधकत्वमुक्तं न वा,—इत्याशङ्क्याह

**शोधकत्वं च मालिन्या देवीनां त्रितयस्य च ।**
**देवत्रयस्य वक्त्राणामङ्गानामष्टकस्य च ।। ९० ।।**
**किं वातिबहुना द्वारवास्त्वाधारगुरुक्रमे ।**
**लोकपास्त्रविधौ मन्त्रान् मुक्त्वा सर्वं विशोधकम् ।। ९१ ।।**

द्वारादिमन्त्राणां पुनरत्र न शोधकत्वं नापि शोध्यत्वमिति भावः ।।९१।।

नन्वध्वषट्कस्य शोध्यत्वं परापरादीनां मन्त्राणां शोधकत्वं चेति यदुक्तं तदिदं सम्बन्धमन्तरेणायःशलाकाकल्पत्वे कथं घटतामित्याशङ्क्याह

**यच्चैतदध्वनः प्रोक्तं शोध्यत्वं शोद्धृता च या ।**
**सा स्वातन्त्र्याच्छिवाभेदे युक्तेत्युक्तं च शासने ।। ९२ ।।**

ननु शिवाभेदस्याविशिष्टत्वादेकत्र शोध्यत्वमपरत्र शोधकत्वमिति वैचित्र्यं किं निमित्तमित्याह सेति । नचैतदस्मदुपज्ञमेवेत्युक्तम् 'इत्युक्तं च शासने' इति । 'शासन' इत्यद्वयनयात्मनि । तदुक्तम्

'सर्वत्र भैरवो भावः सामान्येप्यथ गोचरे ।
न च तद्व्यतिरेकेण परोऽस्तीत्यद्वयागमः ॥'

इति । अद्वयागम इति, अद्वया गतिरित्यर्थः ॥ ९२ ॥

एतदेवोपपादयति

**सर्वमेतद्विभात्येव परमेशितरि ध्रुवे ।**
**प्रतिबिम्बस्वरूपेण न तु बाह्यतया यतः ।। ९३ ।।**

प्रतिबिम्बस्वरूपेणेति, स्वरूपानतिरिक्तत्वेनेत्यर्थः । अत एवोक्तं न तु बाह्यतयेति ॥ ९३ ॥

ननु दर्पणादौ बाह्यार्थसमर्पितत्वादस्ति प्रतिबिम्बस्य वैचित्र्यमिह पुनरुक्तया बाह्यसमर्पकाभावाच्चिदाहितमेव तदिति चित एकत्वात्तत्रास्य प्रमातृप्रमेयादेर्वैचित्र्यं न स्यादित्याशङ्क्याह

**चिद्व्योम्न्येव शिवे तत्तद्देहादिमतिरीदृशी ।**
**भिन्ना संसारिणां रज्जौ सर्पस्रग्वीचिबुद्धिवत् ।। ९४ ।।**

इह खलु चिदेकरूपत्वाद्भावशून्यतया व्योमप्राये शिव एवैकस्मिन् मायाप्रमातृणामीदृशी प्रतिबिम्बकल्पा तस्य तस्य विचित्रस्य देहादेः प्रमातृप्रमेयाद्यात्मनो भावजातस्य मतिः सर्पादिबुद्धिरिव रज्जौ स्वरूपेण भिन्ना, न तु भिन्नप्रत्ययालम्बनेत्यर्थः ॥ ९४ ॥

ननु रज्जुभुजगादिबुद्धिरपि किं भ्रान्तिमात्रमेव,—इत्याशङ्कां निरवकाशयितुं भ्रान्तित्वमेवोपपादयति

**यतः प्राग्देहमरणसिद्धान्तः स्वप्नगोचरः ।**
**देहान्तरादिर्मरणे कीदृग्वा देहसंभवः ।। ९५ ।।**

यतः कस्याचिद्बालादेः प्राच्यस्य प्राथमिकस्य बाल्यावस्थाव्यवस्थितस्य देहस्यान्तर्दग्धगात्रादेश्च मरणस्यान्तर्गाढगाढं निद्रालोश्च सिद्धस्यान्तर्वर्तमानस्यापि देहान्तरं यौवनावस्थावस्थितमुत्तरं प्राग्भाविजीवदवस्थं चेष्टमानावस्थं चान्यच्छरीरमादिशब्दाच्च नीलादि स्वप्नगोचरः स्वप्नादावाभासमानं भ्रान्तिमात्रमेवेत्यर्थः। नहि तथाभूतं शरीरादि स्वप्नादौ सदित्यभिप्रायः। नन्वस्ति शरीरं तथाभूतं तु मा भूत् नत्वेतावतात्यन्तमसतोऽवभास उक्त स्यादित्याशङ्क्याह 'मरणे कीदृग्वा देहसंभव' इति। इह खलु भासमानस्य रूपस्य सत्त्वमसत्त्वं वा निरूप्यं, न चात्र देहमात्रमवभासतेऽपितु प्रतिनियतावस्थावस्थितं तथा च नास्ति,—इति युक्तमुक्तम् 'असद्देहाद्यवभासत' इति। अस्तु वा तत्र कथंचिद्धर्मिमात्रद्वारकं सत्त्वं मरणे तु प्रत्यक्षमेव तद्देहभस्मीभावदर्शनादत्यन्तमसतोऽवभासः कथंकारं पराणुद्यताम् ॥ ९५ ॥

न केवलं स्वप्नादावेतदेवावभासते यावदत्यन्तासंभाव्यमन्यदपि,—इत्याह

**स्वप्नेऽपि प्रतिभामात्रसामान्यप्रथनाबलात् ।**
**विशेषाः प्रतिभासन्ते न भान्त्यन्तेऽपि ते यथा ।। ९६ ।।**

इह खलु स्वप्नादौ नियतधर्मिपरिहारेण शिरश्छेदमात्रादिनिष्ठात् परामर्शमात्राद्यत्सामान्येन तथाप्रथनं तस्मात्, अत एव विशेषमन्तरेण सामान्यप्रतिभासस्यानुपपत्तिलक्षणाद्बलात्कारादनुसंधातुमप्यशक्याः स्वशिरश्छेदादयो विशेषा अपि 'प्रतिभासन्ते'ऽनपह्नवनीयतया प्रस्फुरन्ति,—इति युक्तमुक्तं—सर्वमेतत्संविद्रूपतयैवावभासते न तु बाह्यतयेति ॥ ९६ ॥

ननु चिदेव यद्येवं परिस्फुरति तदेकचित्तत्त्वसाराः सन्तः सर्वे भावाः कथमिवान्योन्यस्य वैचित्र्यमासादयेयुरित्याशङ्क्याह

**शालग्रामोपलाः केचिच्चित्राकृतिभृतो यथा ।**
**तथा मायादिभूम्यन्तलेखाचित्रहृदश्रितः ।। ९७ ।।**

यथाहि उपलत्वाविशेषेऽपि केचिदेव मुद्राशब्दाद्यभिधेयाः शालग्रामोपलाः स्वभावत एव तत्तच्छङ्खचक्रादिसंनिवेशविशेषत्वाद्विचित्राकारभाजस्तथैव

प्रमातृप्रमेयाद्यात्मानः स्वयमविशिष्टा अपि चितः स्वस्वातन्त्र्योल्लासितया मायादिभूम्यन्तया रेखया कलादीनां प्रतिपुंनियतत्वाद्विचित्रोपाधिरूपया तावत्याध्वमर्यादया चित्रहृदो भिन्नभिन्नरूपपरामर्शा इत्यर्थः ॥ ९७ ॥

ननु

'अयमेव भेदो भेदहेतुर्वा भावानां योऽयं
विरुद्धधर्माध्यासः कारणभेदो वा ।'

इत्यादिनोत्या विवादस्तत्कथं चित एकत्वादेवंभावो भवेदित्याशङ्क्याह

**नगरार्णवशैलाद्यास्तदिच्छानुविधायिनः ।**
**न स्वयं सदसन्तो नो कारणाकारणात्मकाः ॥ ९८ ॥**

एतदेवोपपादयति—न स्वयमित्यादिना। यतो नगराद्यर्थजातं स्वयं तावद्बाह्यतया न सत्, तथात्वे हि अस्य स्थूलं सूक्ष्मं वा रूपं स्यात् नचात्रैकमपि संभवति। तथाहि एकरूपतयावभासमानस्य स्थूलस्य कम्पाकम्पादियोगाद्विरुद्धधर्माध्यासेनैकतैव न स्यात्,—इति स्थौल्ये बाधः; परमाणूनामप्यवश्यंभाविनि परस्परसंयोगे षडंशता प्रसजेत्,—इति सौक्ष्म्येऽपि बाधः। नचासदसतो भासनायोगात्, अत एव सत्तानुपपत्तेर्नेदं कारणमसत्तानुपपत्तेश्च न कार्यमित्युक्तं 'नो कारणाकारणात्मकः'इति। नहि सत्तामुत्पत्तेः प्रागसत्तां च विना कारणत्वं कार्यत्वं च घटते'—इत्युक्तं प्राक् ॥ ९८ ॥

ननु लोके कार्यकारणादिरूपश्चिरप्ररूढोऽयं व्यवहारो—यदग्निः कारणं धूमश्च कार्यमिति तन्नान्तरीयक एव च सदसत्त्वे,—इति किमेतदुक्तमित्याशङ्क्याह

**नियतेश्चिररूढायाः समुच्छेदात्प्रवर्तनात् ।**
**अरूढायाः स्वतन्त्र्योऽयं स्थितश्चिद्व्योमभैरवः ॥ ९९ ॥**

इह हि पारमेश्वर्या एव नियतिशक्तेरिदं विजृम्भितं—यदग्निः कारणं धूमश्च कार्यमिति, न पुनरग्न्यादीनामेवंस्वभावत्वम्। तथात्वे हि नियत एव कार्यकारणभावो भवेत्, न चैवमस्ति—यदग्निमन्तरेण योगीच्छयाप्यभूतस्य प्रादुर्भावो दृश्यते,—इत्युक्तं चिररूढाया नियतेः समुच्छेदादरूढायाश्च प्रवर्तनादिति। अतश्च पूर्णरूपायाश्चित एवात्र सर्वकर्तृत्वमित्युपपादितं प्राग्बहुशः ॥ ९९ ॥

ननु यद्येवं पूर्णरूपा चिदेव तथा तथावभासते तत्कोऽयं भेदो नाम,—इत्याशयङ्क्याह

**एकचिन्मात्रसंपूर्णभैरवाभेदभागिनि ।**
**एवमस्मीत्थनामर्शो भेदको भावमण्डले ॥१००॥**

तेनाख्यातिविजृम्भामात्रसारोऽयं भेद इत्यभिप्रायः ॥ १०० ॥

ननु बीजाङ्कुरादावनुप्रवेश एव चितो नास्ति मृद्घटादौ पुनरस्ति तदनुप्रवेशः, किं त्वसौ कौम्भकारी न पूर्णा,—इति कथमुक्तं—पूर्णरूपायाश्चित एव सर्वत्र कर्तृत्वमित्याशङ्क्याह

**सर्वप्रमाणैर्नो सिद्धं स्वप्ने कर्त्रन्तरं यथा ।**
**स्वसंविदः स्वसिद्धायास्तथा सर्वत्र बुद्ध्यताम् ॥१०१॥**

इह यथा केनापि प्रमाणेन स्वप्नादाववभासमानानां घटाङ्कुरादीनां स्वतःसिद्धायाः स्वसंविदः सकाशादन्यः कश्चित्कारणतयाभिमतः कर्ता न सिद्धस्तथा सर्वत्र जागरादावपि 'बुद्ध्यतां' संविद एव सर्वदशासु सर्वभावाविर्भावने पूर्णं कर्तृत्वं बोद्धव्यमित्यर्थः ॥ १०१ ॥

ननु कोऽर्थस्तथाबोधेन,—इत्याशङ्क्याह

**चित्तचित्रपुरोद्याने क्रीडेदेवं हि वेत्ति यः ।**
**अहमेव स्थितो भूतभावतत्त्वपुरैरिति ॥१०२॥**

यः खलु 'अहमेव विश्वात्मतयोल्लसित' इत्येवं विमृशेत् स चित्तमेव तत्तद्वैचित्र्यातिशययोगाच्चित्रे पुरे, न पुनररण्यादौ तत्र तथा चमत्कारतारतम्याभावादनन्तभावसंभारनिर्भरमुद्यानं, तत्र 'क्रीडेत्' स्वात्मन्येव पूर्णतया विश्राम्यञ्जीवन्नेव मुक्तो भवतीत्यर्थः ॥ १०२ ॥

ननु सर्व एव जन्मादिविनाशान्तं विकारजातमनिच्छन्तोऽपि बलादासादयन्ति,—इत्यत्र कर्मादिनिमित्तमन्यदनुसरणीयं तत्कथमुक्तं—चित एव सर्वत्र कर्तृत्वमिति—इत्याशङ्क्याह

**एवं जातो मृतोऽस्मीति जन्ममृत्युविचित्रताः ।**
**अजन्मन्यमृतौ भान्ति चित्तभित्तौ स्वनिर्मिताः ॥१०३॥**

यद्गीतम्

'न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥' ( गी० २।२० )

इति ॥ १०३ ॥

ननु यदि जन्ममृत्यू न स्तस्तत्कथमिहपरलोकादिव्यवस्था स्यादित्याशङ्क्याह

**परेहसंविदामात्रं परलोकेहलोकते ।**

नन्विह परत्र च देशे काले वा संविदिति इहत्वपरत्वयोर्देशकालात्मकत्वात्कथं संविन्मात्ररूपत्वं स्यादित्याशङ्क्याह

**वस्तुतः संविदो देशः कालो वा नैव किंचन ॥१०४॥**

ननु संविदो देशकालौ मा भूतां, संवित्क्रियाकर्मणस्तु संवेद्यस्य धारकतयाधारभूतौ देशकालौ विना भूतभावाद्यात्मना स्वसाक्षिकमपि नैयत्यं न स्यादित्याशङ्क्याह

**अभविष्यदयं सर्गो मूर्तश्चेन्न तु चिन्मयः ।**
**तदवेक्ष्यत तन्मध्यात् केनैकोऽपि धराधरः ॥१०५॥**

इह खलु विश्वं नाम किं संविदो बहिर्मूर्तमुत संविन्मयं, तत्रास्य मूर्तत्वे धार्यत्वादेव सर्वस्य किं केन धार्यं, संविन्मयत्वे पुनर्धार्यधारकभावार्थं एव कः, तत्रापि वा संविदेव धारिका यद्भित्ताविदं सर्वं प्रस्फुरेत् ॥ १०५ ॥

ननु पृथिव्यपां धारिका आपश्च तेजसस्तच्च वायोरित्यादिराधाराधेयभावक्रमः सर्वत्रैवोक्तः,—इति किमेतदुक्तं किं केन धार्यमिति—इत्याशङ्क्याह

**भूततन्मात्रवर्गादेराधाराधेयताक्रमे ।**
**अन्ते संविन्मयी शक्तिः शिवरूपैव धारिणी ॥१०६॥**

एवमपि ह्यवश्यमन्ते संविद एव धारकत्वमभ्युपगन्तव्यम्, अन्यथा हि पृथिव्या अपि किं धारकं तस्यापि किम्,—इत्याद्यनवस्था न शाम्येत् ।

पृथिव्यादीनां न संवेद्यत्वान्यथानुपपत्त्या संविन्मयतायामेवैवमाधाराधेयभावः संगच्छते,—इति संविदेवैका भगवती विश्वोल्लासने धारणे च निमित्तं येन न कश्चिद्दोषः ॥ १०६ ॥

तदाह

**तस्मात्प्रतीतिरेवेत्थं कर्त्री धर्त्री च सा शिवः ।**
**ततो भावास्तत्र भावाः शक्तिराधारिका ततः ॥१०७॥**

प्रतीतिरिरिति संवित् । ननु शक्तिरेव धारिणीत्युक्तं, परिपूर्णसंविदात्मनि शैवे धामनि पुनः क आधाराधेयभावाद्यर्थः,–इत्याशङ्क्याह 'शक्तिराधारिका ततः' इति । तदि[त्रे]ति, तत्र शिव एवेत्यर्थः । संविन्मयी शिवरूपैव सेत्युक्तम् ॥ १०७ ॥

नचैतदपूर्वं किंचिदित्याह

**सांकल्पिकं निराधारमपि नैव पतत्यधः ।**
**स्वाधारशक्तौ विश्रान्तं विश्वमित्थं विमृश्यताम् ॥१०८॥**

'गगने चतुर्दन्तो हस्ती धावति' इत्यादाविव वैकल्पिक्यां संविदि भवं हस्त्यादि विनापि बाह्यमाधारं स्वस्यां संविन्मात्ररूपायां धारिकायां शक्तौ विश्रान्तं सत् यथा नैवाधः पतति स्वावष्टम्भेनैवावतिष्ठते तथा निखिलमिदं विश्वमपि विमृश्यतां, निश्चयेन परिगृह्यतामित्यर्थः ॥ १०८ ॥

ननु घटाद्यात्मना परिस्फुरतो धरादिवपुषो वस्तुसतो विश्वस्य सांकल्पिकमवस्तुभूतं निदर्शनं संगच्छतां कथमित्याशङ्क्याह

**अस्या घनाहमित्यादिरूढिरेव धरादिता ।**
**यावदन्ते चिदस्मीति निर्वृत्ता भैरवात्मता ॥१०९॥**

घनद्रवादिरूपमपि विश्वं तथा तथा संविदि विमर्शप्ररोहमनधिगच्छत् संविद्बाह्यमेव वस्तुसत्तां न जातुचिदधिशयीत,—इत्याशयः ॥ १०९ ॥

ननु यद्यनुदितानस्तमितसंविन्मात्रसारं घनद्रवादिरूपं धराद्यर्थजातमभ्युपेयते तत्कथमस्योदयव्यययोगः समाधीयते,—इत्याशङ्क्याह

**मणाविन्द्रायुधे भास इव नीलादयः शिवे ।**
**परमार्थत एषां तु नोदयो न व्ययः क्वचित् ॥११०॥**

ननु तत्तन्नियतदेशकालावलम्बनेन तत्तदर्थजातस्योत्पत्तिविनाशावनपह्नवनीयावेव,— इति कथमुक्तं, नैषामुदयो व्ययो वेति,—इत्याशङ्क्याह

**देशे कालेऽत्र वा सृष्टिरित्येतदसमञ्जसम् ।**

**चिदात्मना हि देवेन सृष्टिर्दिक्कालयोरपि ।।१११।।**

न च मायापदेऽपि देशकालयोः कश्चिन्नियमः,—इत्याह

**जागराभिमते सार्धहस्तत्रितयगोचरे ।**

**प्रहरे च पृथक् स्वप्नाश्चित्रदिक्कालमानिनः ।।११२।।**

जाग्रद्दशायामपि हि नियतपरिमाणे शरीरदेशे प्रहराद्यात्मनि काले च पृथगुर्वीपर्वताकाशादितया दिनमाससंवत्सरकल्पादितया च विचित्रदिक्कालाद्यभिमानभाजः स्वप्नदशावलम्बिनोऽवभासा उपलभ्यन्ते,—इति को नामानयोर्नियमः ॥ ११२ ॥

एवं च येऽप्यत्यन्तसंकुचितक्षणात्मककालनियमाद्भावानां क्षणिकत्वमाचक्षते तेऽप्यनया दिशा परास्ताः,—इत्याह

**अत एव क्षणं नाम न किंचिदपि मन्महे ।**

**क्रियाक्षणे वाप्येकस्मिन् बह्व्यः संस्युर्द्रुताः क्रियाः ।११३।**

**तेन ये भावसंकोचं क्षणान्तं प्रतिपेदिरे ।**

**ते नूनमेनया नाड्या शून्यदृष्ट्यवलम्बिनः ।।११४।।**

अतो देवकालयोरनियमादेव न कश्चिन्नियतः क्षणो नाम सिद्धो यत एकस्मिन्नप्युत्पत्त्यादिक्षणे 'द्रुता' निरन्तरा 'बह्व्यः' स्थित्यर्थक्रियाविनाशाद्याः क्रियाः संस्युः । क्षणस्याप्यवान्तरानेकक्षणयोगात् क्षणत्वमेव न पर्यवस्येत्, भावानां क्षणादूर्ध्वमवस्थानानभ्युपगमात् क्षणस्य चाव्यवस्थितेः क्षणमपि स्थितिर्न स्यात्,—इति शून्यतैवावलम्बिता भवेत्, तत्किं विज्ञाननयादिसोपानकल्पनया ? इति ॥ ११४ ॥

ननु यदि देशकालौ वास्तवौ न स्तस्तत्कोऽयं व्यवहारो नाम,—इत्याशङ्क्याह

**तद्य एष सतो भावान् शून्यीकर्तुं तथासतः ।**

**स्फुटीकर्तुं स्वतन्त्रत्वादीशः सोऽस्मत्प्रभुः शिवः ।।११५।।**

सत इति, बहीरूपतया। शून्यीकर्तुमिति, बाह्यतान्यक्कारेण संविन्मयतयावस्थापयितुमित्यर्थः। असत इति, संविन्मात्रसारतया रूपशून्यानित्यर्थः। स्फुटीकर्तुमिति, बहिरवभासयितुम् ॥ ११५ ॥

प्रकृतमेवोपसंहरति

**तदित्थं परमेशानो विश्वरूपः प्रगीयते।**
**न तु भिन्नस्य कस्यापि धरादेरुपपन्नता ॥११६॥**
**उक्तं च चैतत्पुरैवेति न भूयः प्रविविच्यते।**
**भूयोभिश्चापि बाह्यार्थदूषणैः प्रव्यरम्यत ॥११७॥**

प्रव्यरम्यतेति, प्रविरतं पर्यवसितं समाप्तमिति यावत् ॥ ११७ ॥

इदानीमाह्निकार्थमेव श्लोकस्य प्रथमार्धेनोपसंहरति

**तदित्थमेष निर्णीतः कलादेर्विस्तरोऽध्वनः ॥११८॥**

स्पष्टमिति शिवम् ॥ ११८ ॥

निःशेषषड्विधाध्वप्रविभागसतत्त्वविद्व्यधाद्विवृतिम्।
एकादशाह्निके किल जयरथपदलाञ्छनः कश्चित् ॥

इति श्रीमन्महामाहेश्वराचार्यवर्य-श्रीमदभिनवगुप्तविरचिते
तन्त्रालोके

श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते कलादिप्रदर्शनं
नामैकादशमाह्निकं समाप्तम् ॥ ११ ॥

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकाभिख्यटीकोपेते

## द्वादशमाह्निकम्

अमृतात्मकार्धचन्द्रप्रगुणाभरणोऽध्वमण्डलं निखिलम् ।
विश्रमयन्निजसंविदि जयदोऽस्तु सतां सदा जयदः ॥

अथ द्वितीयार्धेनाध्वोपयोगं प्रकाशयितुमाह

**अथाध्वनोऽस्य प्रकृत उपयोगः प्रकाश्यते ॥ १ ॥**

प्रकृत इति यागादौ ॥ १ ॥

तदेवाह

**इत्थमध्वा समस्तोऽयं यथा संविदि संस्थितः ।**
**तद्द्वारा शून्यधीप्राणनाडीचक्रतनुष्वथो ॥ २ ॥**
**बहिश्च लिङ्गमूर्त्यग्निस्थण्डिलादिषु सर्वतः ।**
**तथा स्थितः समस्तश्च व्यस्तश्चैष क्रमाक्रमात् ॥ ३ ॥**

तद्द्वारेति संविद्द्वारेण, तत्सृष्टा एव शून्यादयः । यदुक्तं प्राक्

'संविद्द्वारेण तत्सृष्टे शून्ये धियि मरुत्सु च ।
नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः ॥' (तं० ८।४)

इति । बहिरिति शून्यादिप्रमातुः, मूर्तिः शिष्यात्मा, आदिशब्दात् कुम्भादौ । तदुक्तम्

'कुम्भमण्डलवह्निस्थश्चाध्वात्मस्थः शिशोश्च यः ।
सूत्रस्थश्चापि चैकत्र अध्वसंधिः प्रकीर्तितः ॥'

इति । समस्त इति षड्विधोऽपि, व्यस्त इति शोध्यत्वेनाभिमतः कलाद्यन्यतमः, क्रमाक्रमादिति क्रमः स्थूलसूक्ष्मपरात्मा, अक्रम एकप्रघट्टकात्मा ॥ ३ ॥

नन्वेवमवस्थानेनास्य किं प्रयोजनमित्याशङ्क्याह

**आसंवित्तत्त्वमाबाह्यं योऽयमध्वा व्यवस्थितः ।**
**तत्र तत्रोचितं रूपं स्वं स्वातन्त्र्येण भासयेत् ॥ ४ ॥**

संवित्तत्त्वादारभ्य बाह्यपर्यन्तं योऽयं षड्विधोऽप्यध्वा संस्थितस्तत्र तत्र भुवनपदाद्यात्मन्यध्वनि स्वं संकुचितमात्मानं स्वातन्त्र्येण 'अहमेव परो हंसः' (स्व० ४।३९५) इत्याद्यात्मना स्वविमर्शेनोचितमसंकुचितं परशिवात्मकं रूपं भासयेत् तन्मयं संपादयेदित्यर्थः । तदुक्तम्

'अस्य विश्वस्य सर्वस्य पर्यन्तेषु समन्ततः ।
अध्वप्रक्रियया तत्त्वं शैवं ध्यात्वा महोदयः ॥' (वि० भै० ५७ श्लो०)

इति । अनेन चानुजोद्देशोद्दिष्टमभेदभावनाख्यमपि प्रमेयमासूत्रितम् ॥ ४ ॥

ननु संकुचितस्यापि देहादिप्रमातुः कथमेवं भायादित्याशङ्क्याह

**सर्वं सर्वत्र रूपं च तस्यापि न न भासते ।**
**नह्यवच्छेदितां क्वापि स्वप्नेऽपि विषहामहे ॥ ५ ॥**

अवच्छेदितामिति संकुचितात्मतामिति । यदाहुः

'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तश्चाविकल्प्यश्च'

इति ॥ ५ ॥

नन्वेवमवभासनेन कोऽर्थः, इत्याशङ्क्याह

**एवं विश्वाध्वसंपूर्णं कालव्यापारचित्रितम् ।**
**देशकालमयस्पन्दसद्म देहं विलोकयेत् ॥ ६ ॥**

ततश्च किमित्याशङ्क्याह

**तथा विलोक्यमानोऽसौ विश्वान्तर्देवतामयः ।**
**ध्येयः पूज्यश्च तर्प्यश्च तदाविष्टो विमुच्यते ॥ ७ ॥**

न केवलं देहादावेवंभावनेनैतत्स्याद्यावद्बहिरपि, इत्याह

**इत्थं घटं पटं लिङ्गं स्थण्डिलं पुस्तकं जलम् ।**
**यद्वा किंचित्क्वचित्पश्येत्तत्र तन्मयतां व्रजेत् ॥ ८ ॥**

नन्‌ संविन्मयतापत्तावर्चनादि सर्वत्र निमित्तमुक्तमिह पुनः किमेत-दुच्यते, इत्याशङ्क्याह

**तत्रार्पणं हि वस्तूनामभेदेनार्चनं मतम् ।**
**तथा संपूर्णरूपत्वानुसंधिर्ध्यानमुच्यते ।। ९ ।।**
**संपूर्णत्वानुसंधानमकम्पं दार्ढ्यमानयन् ।**
**तथान्तर्जल्पयोगेन विमृषञ्जपभाजनम् ।। १० ।।**
**तत्रार्पितानां भावानां स्वकभेदविलापनम् ।**
**कुर्वंस्तद्रश्मिसद्भावं दद्याद्धोमक्रियापरः ।। ११ ।।**

दार्ढ्यमिति साक्षात्कारपर्यन्तम् । तथेति अनुसंधानदार्ढ्येन । दद्यादिति तद्रश्मिरूपतया चकास्यादित्यर्थः । अयमेव होम उच्यते इत्युक्तं 'होमक्रिया-परः' इति ॥ ११ ॥

नन्वेवमनुतिष्ठतः किं स्यादित्याशङ्क्याह

**तथैवंकुर्वतः सर्वं समभावेन पश्यतः ।**
**निष्कम्पता व्रतं शुद्धं सास्यं नन्दिशिखोदितम् ।। १२ ।।**

सर्वं हेयोपादेयाद्यात्मकम् । तदुक्तं तत्र

'सर्वत्र समता ह्यत्र व्रते देवि विधीयते ।
न कषायैर्व्रती भिक्षुर्न मौनी संयतो भवेत् ॥
यावन्न परमेशानो विज्ञातः सर्वगः शिवः ।
तस्मादन्तर्मुखो नित्यं साधनातत्परो व्रती ॥
सर्वभूतान्तरस्थायी यस्मादेकः शिवः प्रिये ।
तस्मात्समत्वं मूलं तु व्रतानां परमं व्रतम् ॥
येऽन्ये केचिद्व्रता भद्रे तेऽङ्गभावं व्रजन्त्यतः ।
अङ्ग्यसौ कथितो देवि व्रतानां परमो व्रतः ॥'

इति ॥ १२ ॥

अयमेव च परः समाधिरित्याह

**तथार्चनजपध्यानहोमव्रतविधिक्रमात् ।**
**परिपूर्णां स्थितिं प्राहुः समाधिं गुरवः पुरा ।। १३ ।।**

पुरागुरवः पूर्वगुरवः श्रीकण्ठाद्याः। यदाहुः

'स्वपरस्थेषु भूतेषु जगत्यस्मिन्समानधीः।
शिवोऽहमद्वितीयोऽयं स समाधिः परः स्मृतः॥' (ने० त० ८।१८)

इति॥ १३॥

नन्वेवंविधे त्वर्चनादौ किं बाह्यं किञ्चिदपेक्षनीयं न वा ? इत्याशङ्क्याह

**अत्र पूजाजपाद्येषु बहिरन्तर्द्वयस्थितौ।**
**द्रव्यौघे न विधिः कोऽपि न क्वापि प्रतिषिद्धता॥ १४॥**

बहिःस्थितौ द्रव्यौघे मद्यादौ, अन्तःस्थितौ नालाज्यादौ॥ १४॥

नन्वत्र कस्मादुपेक्षणीयत्वमित्याशङ्क्याह

**कल्पनाशुद्धिसंध्यादेर्नोपयोगोऽत्र कश्चन।**

नन्वत्र किं प्रमाणमित्याशङ्क्याह

**उक्तं श्रीत्रिकसूत्रे च जायते यजनं प्रति॥ १५॥**
**अविधिज्ञो विधिज्ञश्चेत्येवमादि सुविस्तरम्।**

श्रीत्रिकसूत्र इति त्रिकप्रमेयसूचिकायां श्रीपरात्रीशिकायामित्यर्थः। तथा च तत्र

'अविधिज्ञो विधानज्ञो जायते यजनं प्रति।' (परात्री० २० श्लो०)

इत्यादि बहूक्तम्। एतच्च प्रागेवोक्तमिति न पुनरायस्तमिह॥ १५॥

ननु एवमप्यत्र

'नित्योदिता पराशक्तिर्यद्यप्येषा तथापि च।
बाह्यचर्याविहीनस्य दुर्लभा कौलिकी स्थितिः॥'

इत्यादिना बाह्योपयोगः कथञ्चिदाम्नातः, इति किमेतदुक्तमित्याशङ्क्याह

**यदा यथा येन यत्र स्वा संवित्तिः प्रसीदति॥ १६॥**
**तदा तथा तेन तत्र तत्तद्भोग्यं विधिश्च सः।**

एतच्च सर्वमेवात्र विहितमित्याह

**लौकिकालौकिकं सर्वं तेनात्र विनियोजयेत्॥ १७॥**

**निष्कम्पत्वे सकम्पस्तु कम्पं निर्ह्रासयेद्बलात् ।**

निष्कम्पत्व इति निर्विकल्पकत्व इत्यर्थः । कम्पं शङ्कादिरूपं बलान्निर्ह्रासयेत् तत्रैव यत्नपरो भवेदित्यर्थः ॥ १७ ॥

तदाह

**यथा येनाप्युपायेन क्रमादक्रमतोऽपि वा ॥ १८ ॥**
**विचिकित्सा गलत्यन्तस्तथासौ यत्नवान्भवेत् ।**

विचिकित्सेति शङ्का, अनेन च कम्पह्रासाख्यमपि प्रमेयमुक्तम् ॥

अतश्च किमित्याह

**धीकर्माक्षगता देवीर्निषिद्धैरेव तर्पयेत् ॥ १९ ॥**

निषिद्धैरिति 'यद्द्रव्यं लोकविद्विष्टम्' इत्यादिनाम्नातैः ॥ १९ ॥

नन्वेवं निषिद्धाचरणे किं प्रमाणमित्याशङ्क्याह

**वीरव्रतं चाभिनन्देदिति भर्गशिखावचः ।**

तदुक्तं तत्र

'वीरव्रतं चाभिनन्देद्यथायोगं तथाभ्यसेत् ।'

इति ॥

ननु शङ्कादिभिः किं कृतं यदेवं तन्निर्ह्रासे यत्नः, इत्याशङ्क्याह

**तथाहि शङ्का मालिन्यं ग्लानिः संकोच इत्यदः ॥ २० ॥**
**संसारकारागारान्तः स्थूलस्थूणाघटायते ।**

मालिन्यमाणवमलात्मकमज्ञानम् । ग्लानिस्तदुत्थोऽनुत्साहः । यदुक्तम्

'ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।' (स्प० ३।८)

इति । संकोचो देहादिप्रमातृतापारिमित्यम्, स्थूणाशब्देन चात्र हडिर्लक्ष्यते ॥ २० ॥

नन्वस्त्येव दुरुन्मूलं शङ्काया बीजं यदिदं कार्यमिदं नेति तत्कथं तन्निर्ह्रासे यत्नवता भाव्यमित्याशङ्क्याह

**मन्त्रा वर्णस्वभावा ये द्रव्यं यत्पाञ्चभौतिकम् ।। २१ ।।**

**यच्चिदात्म प्राणिजातं तत्र कः संकरः कथम् ।**

संकरो हि भिन्नस्वभावानां भवति न च मन्त्रादीनां कश्चित्स्वभाव इत्युक्तं वर्णस्वभावा इति पाञ्चभौतिकमिति चिदात्मेति च । एतच्च प्रागेव निषेधविधितुल्यत्वाभिधानसमये निरूपितमित्यत एवावधार्यम् ॥ २१ ॥

एवमस्या निमित्ताभावात् संभव एव नास्ति,—इत्याह

**संकराभावतः केयं शङ्का तस्यामपि स्फुटम् ।। २२ ।।**

**न शङ्केत तथा शङ्का विलीयेतावहेलया ।**

संकरशब्दोऽत्र संकीर्यमाणयोः कार्याकार्ययोरुपलक्षणम् । केयमिति न काचिदित्यर्थः । एवं निर्हेतुकत्वेऽपि अस्यां प्रमादादुल्लसन्त्यां न विचिकित्सितव्यमित्याह 'तस्यामपि न शङ्केत' इति । तथा च सुखमेव तन्निरासः सिद्ध्येदित्युक्तं 'तथा शङ्का विलीयेतावहेलया' इति ॥ २२ ॥

न चात्र युक्तिरेवास्ति यावदागमोऽपीत्याह

**श्रीसर्वाचारवीरालीनिशाचरक्रमादिषु ।। २३ ।।**

**शास्त्रेषु विततं चैतत्तत्र तत्रोच्यते यतः ।**

क्रमः क्रमदर्शनम्, आदिशब्दाच्छ्रीगमशास्त्रम् ॥ २३ ॥

तत्रत्यमेव ग्रन्थैकदेशमुदाहरति

**शङ्कया जायते ग्लानिः शङ्कया विघ्नभाजनम् ।। २४ ।।**

'शङ्कया कुगतिं याति तस्माच्छङ्कां परित्यजेत ॥'

इत्यस्य द्वितीयमर्धम् । तत्र श्रीसर्ववीरे

'अज्ञानाच्छङ्कते मूढस्ततः सृष्टिश्च संहृतिः ।
मन्त्रा वर्णात्मकाः सर्वे वर्णाः सर्वे शिवात्मकाः ॥
पेयापेयं स्मृता आपो भक्ष्याभक्ष्यं तु पार्थिवम् ।
सुरूपं च विरूपं च तत्सर्वं तेज उच्यते ।
स्पृश्यास्पृश्यौ स्मृतो वायुश्छिद्रमाकाशमुच्यते ॥
नैवेद्यं च निवेदी च नैवेद्यं गृह्णते च ये ।

सर्वं पञ्चात्मकं देवि न तेन रहितं क्वचित् ॥
इच्छामुत्पादवेदात्मा कथं शङ्का विधीयते ।'

इत्याद्युक्तम् । श्रीवीरावलौ च सप्तमोद्देशे बहूक्तं तच्च प्रागपि किंचित्संवादितमिति ग्रन्थविस्तरभयान्न पुनर्लिखितं तत्तत एवावधार्यम् । श्रीनिशाचरेऽपि

'विकल्पाञ्जायते शङ्का सा शङ्का बन्धरूपिणी ।
बन्धोऽन्यो नहि विद्येत ऋते शङ्कां विकल्पजाम् ॥'

इत्युपक्रम्य

मन्त्रशङ्कात्मशङ्का च तत्त्वशङ्का परा मता ।
षड्विधां कथयिष्यामि यथा मोक्षमवाप्स्यसि ॥'

इत्यादि बहूक्तम् । श्रीक्रमसद्भावेऽपि

'................शङ्काशून्यो　　　　भवेत्सदा ।'

इति ॥ २४ ॥

न केवलमेतत्स्वतः शास्त्रतश्च सिद्धं यावद्गुरुतोऽपि,—इत्याह

**उवाचोत्पलदेवश्च　　　श्रीमानस्मद्गुरोर्गुरुः ।**

तदेवाह

**सर्वाशङ्काशर्नि मार्गं नुमो माहेश्वरं त्विति ॥ २५ ॥**

तदुक्तम्

'सर्वाशङ्काशर्नि　सर्वालक्ष्मीकालानलं　तथा ।
सर्वामङ्गल्यकल्पान्तं　मार्गं　माहेश्वरं　नुमः ॥'(उ० स्तो० २।२८)

इति ॥ २५ ॥

एतदेव श्लोकस्य प्रथमार्धेनोपसंहरति

**अनुत्तरपदाप्तये　　तदिदमाणवं　　दर्शिता-**
**भ्युपायमतिविस्तरान्ननु　विदांकुरुध्वं बुधाः ॥ २६ ॥**

दर्शिताभ्युपायमिति दर्शितः स्थानभेदाद्यात्माभ्युपायो यस्य इति शिवम् ॥ २६ ॥

चिदभेदभावमावशनिरस्तशङ्काकलङ्कदुर्ललितः ।
जयरथ एतदरचयत् कृतविवृति द्वादशाह्निकं सद्यः ॥

इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्ताचार्यविरचिते तन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेतेऽध्वोपयोगप्रकाशनं नाम द्वादशमाह्निकम् ॥ १२ ॥

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकाख्यटीकोपेते

## त्रयोदशमाह्निकम्

जयवर्धनः सुरर्द्धि वर्धयताात्पूर्णचन्द्रविशदगतिः ।
आप्याययति जगद्यः स्वशक्तिपातामृतासारैः ॥

इह

'संविदि फलभेदोऽत्र न प्रकल्प्यो मनीषीभिः । ( मा० वि० २।२५ )

इत्याद्युक्त्या यद्याणवादीनामनुत्तरपदावाप्तिरेव फलं तदेक एवोपाय उपदिश्यतां किमेभिस्त्रिभिरित्याशङ्कां निराचिकीर्षुरधिकारभेदमुपदिष्टं द्वितीयार्धेन शक्तिपातक्रमविवेकमभिधातुं प्रतिजानीते

**अथाधिकृतिभाजनं क इह वा कथं वेत्यलं**
**विवेचयितुमुच्यते विविधशक्तिपातक्रमः ॥ १ ॥**

इहेति, आणवादावुपायत्रये ॥ १ ॥

नन्वन्यैरुक्तः शक्तिपातविवेक इति किमिहापि तेन स्यात् बाढं किंतु तदेवानूद्य दूषयित्वा स्वसिद्धान्तः करिष्यति इत्याह

**तत्र केचिदिह प्राहुः शक्तिपात इमं विधिम् ।**
**तं प्रदर्श्य निराकृत्य स्वमतं दर्शयिष्यते ॥ २ ॥**

इमं विधिमिति, उपक्रान्तं शक्तिपातविवेकप्रकारमित्यर्थः ॥ २ ॥

नन्विह प्रकृतिपुरुषविवेकज्ञानान्मुक्तिस्तस्य च वैराग्यादि निमित्तमिति किमदृष्टस्य शक्तिपातस्य परिकल्पनेनेत्याशङ्कां गर्भीकृत्य सांख्यात्तावदाधिक्यं प्रतिपादयति

**तत्रेदं दृश्यमानं सत्सुखदुःखविमोहभाक् ।**
**विषमं सत्तथाभूतं समं हेतुं प्रकल्पयेत् ।। ३ ।।**
**सोऽव्यक्तं तच्च सत्त्वादिनानारूपमचेतनम् ।**
**घटादिवत्कार्यमिति हेतुरेकोऽस्य सा निशा ।। ४ ।।**

तत्रेति परकीयशक्तिपातविवेकानुवादतन्निराकारणस्वमतप्रदर्शनेषु कर्तव्येषु शक्तिपातक्रमोपपादनपरतयेदमुच्यते इत्यर्थः । इदमिति महदादिक्षित्यन्तं, सुखदुःखमोहभावत्वादेव विषमं परस्पराङ्गाङ्गिभावावस्थितसत्त्वादि गुणरूपमित्यर्थः । तथाभूतमिति सुखदुःखमोहस्वभावम् । सममिति अनङ्गाङ्गिभावावस्थितगुणमित्यर्थः । अत एव 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इत्युक्तम् । स इति हेतुः । नन्वस्तु सांख्यमतमेतद्वैषम्यं साम्यविश्रान्तमिति; साम्यं च नित्यमेकमकारणपूर्वकं तत ऊर्ध्वं तु तद्धेतुभूतं तत्त्वान्तरं न संभवेदिति किं नाम तत आधिक्यमित्याशङ्क्याह तच्चेत्यादि । अयं चात्र प्रयोगः– अव्यक्तं कार्यमाचैतन्ये सत्यनेकत्वात् यदाचैतन्ये सत्यनेकं तत्सर्वं कार्यं यथा घटः, यन्न कार्यं तदाचैतन्ये सत्यनेकं न भवति यथात्मा, आचैतन्ये सत्यनेकं चाव्यक्तं तस्मात्कार्यमिति । उक्तं च प्राक्

'अचेतनमनेकात्म सर्वं कार्यं यथा घटः ।
प्रधानं च तथा तस्मात्कार्यं नात्मा तु चेतनः ।।' ( ९।१५६ )

इति । कार्यत्वाच्चाव्यक्तस्य किं कारणमित्युक्तं हेतुरेकोऽस्य सा निशेति ॥ ४ ॥

नन्वेवमस्माकमिव प्रकृतिर्मायैव भवतां विश्वकारणमस्तु किं तदधिष्ठात्रेश्वरेणापि,—इत्याशङ्क्याह

**सा जडा कार्यताद्रूप्यात्कार्यं चास्यां सदेव हि ।**
**कलादिधरणीप्रान्तं जाड्यात्सा सूतयेऽक्षमा ।। ५ ।।**
**तेनेशः क्षोभयेदेनां क्षोभोऽस्याः सूतियोग्यता ।**

ननु कार्यजाड्याद्यद्यपि मायाया अपि जाड्यं तत्कुम्भकारस्यापि कुम्भवत् तत्प्रसजेदित्याशङ्क्याह 'कलादिधरणीप्रान्तं कार्यं चास्यां सदेव हि' इति । नियतिदशायां हि यदेव यस्य केनचिद्रूपेणानुयायि भासते तदेव तस्य मृदिव-घटस्य मुख्यं कारणं तत्रैव चास्य सत्त्वमिति भावः । तेनेति सूत्यक्षमत्वेन

हेतुना। एवं च प्रकृतिपुरुषादिविवेकज्ञानादेव मुक्तिर्न स्यादित्यावेदितम्। नहि ईश्वरशक्तिपातमन्तरेण तद्विवेकज्ञानमेवोदियादिति तन्निमित्ताया मुक्तेरपि कोऽवसरः। एतच्च प्रागेवोपपादितं नेह पुनरायस्तम् ॥

ननु चेश्वरक्षोभितेयं किं नाम सुवीतेत्याशङ्क्याह

**पुंसः प्रति च सा भोग्यं सूतेऽनादीन् पृथग्विधान् ॥ ६ ॥**

भोग्यमिति कलादिक्षित्यन्तम्। एवंप्रसवश्चास्या न स्वार्थं जाड्यात्, नापीश्वरार्थं तस्य शुद्धबोधैकरूपत्वात् तत् किं प्रतीत्याशङ्क्योक्तम्—अनादीन् पृथग्विधान् पुंसः प्रतीति ॥

ननु यद्येवं तत् पुंस्त्वाविशेषान्मुक्ताणून् प्रत्यपि किं न तत्सुवीतेत्याह

**पुंसश्च निर्विशेषत्वे मुक्ताणून् प्रति किं न तत्।**

अथोच्यते तत्कर्मसंस्कारसहचारितयास्या एवं सूतियोग्यत्वं, मुक्ताणुषु च कर्मसंस्कार एव नास्तीति कथं तान् प्रत्येवं स्यादिति तत्तेषां कर्मसंस्काराभावः कुतस्त्य इत्याह

**निमित्तं कर्मसंस्कारः स च तेषु न विद्यते ॥ ७ ॥**

**इति चेत्कर्मसंस्काराभावस्तेषां कुतः किल।**

कुत इति न कुतश्चिदित्यर्थः ॥

यतो न तावद्भोगात्कर्मक्षयः, द्विधा हि भोगः संभाव्यते क्रमेणाक्रमेण वा। तत्र क्रमेण भोगे कर्मान्तरप्रसङ्गो दुर्निवार इति कदाचिदपि नास्य क्षयः स्यात्, अक्रमेण पुनरेषां भोग एव न भवेत्, एवं हि कर्मणा क्रमफलदानात्मा स्वभाव एव त्यक्तो भवेत्। न चैतत्, इत्युभयथापि न कर्मक्षयः सिद्ध्येत्। तदाह

**न भोगादन्यकर्मांशप्रसङ्गो हि दुरत्ययः ॥ ८ ॥**

**युगपत्कर्मणां भोगो नच युक्तः क्रमेण हि।**
**फलेद्यत्कर्म तत्कस्मात्स्वं रूपं संत्यजेत्क्वचित् ॥ ९ ॥**

**ज्ञानात्कर्मक्षयश्चेत्तत्कुत ईश्वरचोदितात्।**
**धर्माद्यदि कुतः सोऽपि कर्मतश्चेत्तदुच्यताम् ॥ १० ॥**

अथ

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।' ( गी० ४।३७ )

इत्याद्युक्त्या यदि ज्ञानात्कर्मक्षय इष्यते तज्ज्ञानेऽपि किं निमित्तमित्युक्तं तत्कुत इति । तस्य हि षट्षोडशपदार्थपरिशीलनाद्यनेकप्रकारमन्यैर्निमित्तमुक्तं तत् कतरत् तावत्तदेकनियतमिति न जानीमः । तत्र सेश्वरमीमांसावादाधिकारेण तावदाह ईश्वरेत्यादि । धर्मादिति अपूर्वादिशब्दव्यपदेश्याद्यजेतेत्यादिचोदनालक्षणादर्थादित्यर्थः । तस्यापि किं निमित्तमित्युक्तं कुतः सोऽपीति । कर्मत इति, विहितं हि कर्म क्षणिकत्वाच्चिरभावि फलं दातुमसमर्थमिति तत्सिद्धयेऽन्तरा पुंसा संस्कारविशेषः कल्पनीयो यो धर्म इत्यपूर्व मिति च व्यपदिश्यते यद्वशादियं निखिलैव कर्मफलव्यवस्था सिद्धयेत् । यदाहुः

'फलाय कर्म विहितं क्षणिकं चिरभाविने ।
तत्सद्भिर्नान्यथेत्येवमपूर्वमधिगम्यते ॥'

इति । तदिति कर्म येन संस्कारद्वारिका ज्ञानावाप्तिः स्यात् । उच्यतामिति साक्षेपं प्रश्नेनात्यन्तमसंभाव्यत्वं सूचितम् ॥ १० ॥

तदेवाह

**नहि कर्मास्ति तादृक्षं येन ज्ञानं प्रवर्तते ।**
**कर्मजत्वे च तज्ज्ञानं फलराशौ पतेद्ध्रुवम् ॥ ११ ॥**

चो हेतौ । फलराशौ पतेदिति फलरूपं भवेदित्यर्थः ॥ ११ ॥

नच कर्मान्तरफलने कर्मान्तरस्य प्रक्षयो न्याय्य इत्याह

**अन्यकर्मफलं प्राच्यं कर्मराशिं च किं दहेत् ।**

एवं हि फलत्वाविशेषात् स्वर्गपश्वादिरूपमपि फलं ज्ञानजनकं कर्मापि दहेदित्याशयः ।

ननु कर्मफलत्वाविशेषेऽपि तथेश्वरेच्छावशाज्ज्ञानमेव कर्मान्तरदाहकं न स्वर्गपश्वाद्यपि,—इत्याशङ्क्याह

**ईशस्य द्वेषरागादिशून्यस्यापि कथं क्वचित् ॥ १२ ॥**
**तथाभिसंधिर्नान्यत्र भेदहेतोरभावतः ।**

क्वचिदिति ज्ञाने, अन्यत्रेति स्वर्गपश्वादौ, भेदहेतोरभावत इति, नहि रागद्वेषाविरहभाज ईश्वरस्यैवं कश्चिद्विशेषोऽस्ति येन विनापि निमित्तमेकं दाहकत्वेनाभिसंदध्यादितरच्च दाह्यत्वेनेति ॥

नच कर्मफलत्वेऽपि ज्ञानस्येश्वरेच्छोपनतमेव कर्मान्तरदाहकत्वं किंतु युक्तिबलोपनीतमित्याह

**नन्वित्थं प्रदहेज्ज्ञानं कर्मजालानि कर्म हि ॥ १३ ॥**
**अज्ञानसहकारीदं सूते स्वर्गादिकं फलम् ।**
**अज्ञानं ज्ञानतो नश्येदन्यकर्मफलादपि ॥ १४ ॥**

इह तावदनुष्ठीयमानमग्निहोत्रहवनादिलक्षणं कर्म

'कर्तर्यबोधे कार्मं तु ।　( ई० प्र० ३।५ )

इत्याद्युक्तेरज्ञानसहकारितमेव तत्तत्स्वर्गादिकं फलं जनयेत्, अज्ञानं च कर्मान्तरहेतुमत्तयोदिताज्ज्ञानान्नश्येदिति वस्तुतः सहकार्यभावात् प्रतिरुद्धफलजननसामर्थ्यं कर्म जायते,—इत्येतावदुच्यते ज्ञानं कर्मजालानि प्रदहेदिति ॥

ननु यदि नाम फलदानसहकारिभूताज्ञाननिवर्तनद्वारेण निरुद्धफलजननसामर्थ्यं कर्म संपाद्यते, तद्यत्राज्ञानं च न निवार्यते कर्म च निष्फलीक्रियते तत्र किं प्रतिपत्तव्यमित्याशङ्क्याह

**उपवासादिकं चान्यद्दुष्टकर्मफलं भवेत् ।**
**निष्फलीकुरुते दुष्टं कर्मेत्यङ्गीकृतं किल ॥ १५ ॥**

इह खल्वन्यत् स्मृत्यादिशास्त्रान्तरोद्दिष्टमुपवासादिकमादिशब्दादनघत्वादीत्येवंप्रकारं कर्मफलं दुष्टं भवेत् कर्मफलव्यवस्था तत्रोत्सीदेदित्यर्थः । किल यतो विनाप्यज्ञाननिवृत्तिमर्थादुपवासादि प्रायश्चित्तकर्म दुष्टं श्वदंशाद्यात्म विरुद्धं कर्म निष्फलीकुरुते प्रतिरुद्धफलोत्पादनसामर्थ्यं करोत्येवं कर्मवादिभिर्भवद्भिरेवाभ्युपगतम् । यच्छातातपः

'सुव्रतं तु शुना दष्टं त्रिरात्रमुपवासयेत् ।'

इति ॥ १५ ॥

तन्नैतद्युक्तमज्ञानविनिवर्तनद्वारेण कर्म निष्फलीक्रियते न वा—इति दूरदूरा चिन्ता स्यादित्याशङ्क्याह

**अज्ञानमिति यत्प्रोक्तं ज्ञानाभावः स चेत्स किम् ।**
**प्रागभावोऽथवा ध्वंस आद्ये किं सर्वसंविदाम् ॥ १६ ॥**
**कस्यापि वाथ ज्ञानस्य प्राच्यः पक्षस्त्वसंभवी ।**

'ज्ञानाभाव' इति प्रसज्यप्रतिषेधावलम्बनात् । ध्वंसः प्रध्वंसाभावः । तत्र च प्रागभावं तावद्विकल्पयति आद्य इत्यादिना । कस्यापीति प्रतिनियतस्य । प्राच्यः पक्ष इति सर्वसंविदभावलक्षणः ॥

नह्येवं कश्चित्क्रमः संभवति, यदनादावस्मिन् संसारे यस्य न किञ्चिदपि ज्ञानमुत्पन्नम् एवंविधः संकुचितः कश्चिदात्मास्तीति तदाह

**न किंचिद्यस्य विज्ञानमुदपादि तथाविधः ॥ १७ ॥**
**नाणुरस्ति भवे ह्यस्मिन्ननादौ कोऽन्वयक्रमः ।**

एवं ह्यासावनेलमूकतया घटादिप्राय एव भवेदित्यभिप्रायः ॥

एवं सर्वसंविदभावपक्षं प्रतिक्षिप्यैकतरज्ञानाभावपक्षमपि प्रतिक्षिपति

**भाविनः प्रागभावश्च ज्ञानस्येति स्थिते सति ॥ १८ ॥**
**मुक्ताणोरपि सोऽस्त्येव जन्मतः प्रागसौ न च ।**
**ज्ञानं भावि विमुक्तेऽस्मिन्निति चेच्चर्च्यतामिदम् ॥१९॥**

भाविन इति भविष्यतः । भूतस्याभावे हि प्रध्वंसाभावो भवेदिति भावः । न केवलमस्मदादेर्बद्धात्मनो यावन्मुक्ताणोरपीत्यपिशब्दार्थः । स इति भाविज्ञानप्रागभावः । कथमित्याह जन्मत इत्यादि, असौ प्रागभावो ह्युत्पत्तेः प्राग्भवेदित्युक्तम् । न चास्मिन्मुक्ताणावुत्पत्स्यमानं ज्ञानमेवं चर्च्यतां कस्मान्न मुक्ताणौ ज्ञानं भावीति ॥ १९ ॥

तदाह

**कस्माज्ज्ञानं न भाव्यत्र ननु देहाद्यजन्मतः ।**
**तत्कस्मात्कर्मणः क्षैण्यात्तत्कुतोऽज्ञानहानितः ॥ २० ॥**
**अज्ञानस्य कथं हानिः प्रागभावे हि संविदः ।**
**अज्ञानं प्रागभावोऽसौ न भाव्युत्पत्त्यसंभवात् ॥ २१ ॥**

इह द्वावणुष्वपि हि बोह्येन्द्रियबुद्धिसंबन्धाद्युपस्थापितविषयत्वे ज्ञातुरेव ज्ञानत्वं व्यवह्रियते, न तु वस्ततो ज्ञानस्योदयव्ययौ स्तः, मुक्ताणुषु पुनर्देहेन्द्रियादिसंबन्धवन्ध्यतया ज्ञानस्य व्यावहारिक्यप्युत्पादादिवार्ता दूरतो निरस्तेत्युक्तं 'देहाद्यजन्मत' इति। विकल्पज्ञानं तु मुक्तत्वादेवात्र नाशङ्कनीयम्। 'अज्ञानहानितः' इत्यज्ञानसहचरितानि कर्माणि किल फलन्तीति प्रागेवोक्तम्। ननु मुक्ताणौ भाविज्ञानप्रागभावलक्षणमज्ञानं न स्यादित्युक्तमज्ञानस्य कथं हानिरिति। अवश्यं हि मुक्ताणोरपि भाविनो ज्ञानस्य प्रागभावो भवेदित्याह प्रागभावे हि संविदो ज्ञानमिति। 'संविद' इति कस्यचिद्भाविनो ज्ञानस्येत्यर्थः। ननु मुक्ताणावुत्पत्स्यमानं ज्ञानमेव नास्ति,—इति कस्य प्रागभावः स्यादित्याह 'प्रागभावः' इत्यादि॥

ननु मुक्ताणौ भाविज्ञानासंभवे किं निमित्तमित्याह

**कस्मान्न भावि तज्ज्ञानं ननु देहाद्यजन्मतः।**
**इत्येष सर्वपक्षघ्नो निशितश्चक्रकभ्रमः॥ २२॥**

एवं हि भाविज्ञानाभावे देहाद्यजन्म निमित्तं, तत्रापि कर्मक्षैण्यं तत्राप्यज्ञानहानिस्तत्रापि भाविज्ञानानुत्पादस्तत्रापि देहाद्यजन्म तत्रापि कर्मक्षैण्यमित्येवं परिवर्त्तमानं मूलक्षतिकरं चक्रकचोद्यमापद्यते,—इति नेदं युक्तमुक्तज्ञानं ज्ञानस्य प्रागभाव इति॥ २२॥

न चात्र प्रध्वंसाभावोऽपि न्याय्यः, इत्याह

**अथ प्रध्वंस एवेदमज्ञानं तत्सदा स्थितम्।**
**मुक्ताणुष्विति तेष्वस्तु मायाकार्यविजृम्भितम्॥ २३॥**

सदा स्थितमिति, तत्तद्विषयाहितसुखदुःखज्ञानाद्यात्मनो भोगस्यात्यन्त विनिवृत्तेः, तत्तेष्वप्यज्ञानस्य सदास्थितत्वात् तत्सहचरितानि कर्माण्यपि फलन्तीति तन्निमित्तकमायीयमलोल्लासे कलादिक्षित्यन्तस्य तत्कार्यस्यापि समुल्लासोऽस्तु, बद्धाणुभ्यो मुक्ताणवो न विशिष्येरन्नित्यर्थः॥ २३॥

एवं प्रसज्यप्रतिषेधपक्षं प्रतिक्षिप्य पर्युदासमुपक्षिपति

**अथाज्ञानं नह्यभावो मिथ्याज्ञानं तु तन्मतम्।**
**तदेव कर्मणां स्वस्मिन्कर्तव्ये सहकारणम्॥ २४॥**

ननु यदि नाम कर्मणां स्वकर्तव्यतायां मिथ्याज्ञानं सहकारिकारणं तत्किमेषां फलोत्पत्तिकाल एव सहकारितयाकस्मिकमापतेदुत स्योत्पत्तिकालात्प्रभृति फलावध्यनुवर्तते—इति वाच्यमित्याह

**वक्तव्यं तर्हि किं कर्म यदा सूते स्वकं फलम् ।**
**तदैव मिथ्याज्ञानेन सता हेतुत्वमाप्यते ॥ २५ ॥**

**अथ यस्मिन्क्षणे कर्म कृतं तत्र स्वरूपसत् ।**
**मिथ्याज्ञानं यदि ततस्तादृशात्कर्मणः फलम् ॥ २६ ॥**

तदैव सतेति, मृद इव दण्डादिना कार्योत्पादकाल एवोपनिपततेत्यर्थः । तादृशादिति, मिथ्याज्ञानसहचरितात् । तेन यथा क्षित्यादिसहचरितादन्याद्वीजादेरङ्कुरादि स्यात् तथा मिथ्याज्ञानसहचरितात् कर्मणस्तत्तद्भोगादिलक्षणं फलमिति ॥ २६ ॥

एतदेव क्रमेण प्रतिक्षिपति

**प्राक्पक्षे प्रलये वृत्ते प्राच्यसृष्टिप्रवर्तने ।**
**देहाद्यभावान्नो मिथ्याज्ञानस्य क्वापि संभवः ॥ २७ ॥**
**उत्तरस्मिन्पुनः पक्षे यदा यद्येन यत्र वा ।**
**क्रियते कर्म तत्सर्वमज्ञानसचिवं तदा ॥ २८ ॥**
**अवश्यमिति कस्यापि न कर्मप्रक्षयो भवेत् ।**

'प्रलय' इति देहप्राणबुद्धिशून्यानामपि संक्षयात् प्रकृष्टे लये महासंहार इत्यर्थः । प्राच्येति प्राथमिकय्याद्येति यावत् । इहादिसर्गे तावदीश्वरः स्वकर्मानुरूप्येणैवाणूनां तत्तद्देहसंयोजनादि विदध्यादिति नास्ति विमतिः । कर्म चाज्ञानसहचरितमेव फलति, अज्ञानं च तदा देहाद्यसंभवे निरधिकरणं नास्तीति तत्साहचर्याभावात्प्रतिरुद्धफलजननसामर्थ्येषु कर्मसु सृष्ट्यसंपत्तेस्तत्र प्रवृत्तिमात्रमपि नेश्वरस्य सिद्ध्येदिति न किंचित्स्यात् । अथ कर्मणामुत्पत्तिकालादारभ्य फलपर्यन्तमज्ञानस्यानुवर्तमानत्वं तत्सर्वकालमेषामवश्यमेव तत्साचिव्यं स्यादिति कदाचिदपि कस्यापि न कर्म क्षीयेत्, अज्ञाननाशाद्धि तन्नश्येदित्युक्तम्, अज्ञानं चात्र सर्वदैवानुवर्तमानमवतिष्ठते इति कथमेवंभावो भवेत् ॥

ज्ञानिनापि हि क्रियमाणं कर्म कर्मतयैवाज्ञानसहचरितं स्यात्, तत्त्रापि तन्निरुद्धफलभाजनसामर्थ्यमित्यज्ञानिषु का वार्ता। भवतु वा, मिथ्याज्ञान-साहचर्याभावाज्ज्ञानिना क्रियमाणं कर्म निष्फलं ज्ञानादर्वाक् कृतं तु कथमेवं स्यादित्याह

**यद्यपि ज्ञानवान्भूत्वा विधत्ते कर्म किंचन ॥ २९ ॥**
**विफलं स्यात्तु तत्पूर्वकर्मराशौ तु का गतिः।**

का गतिरिति ज्ञानिनोऽप्यनन्तपूर्वकर्मवैफल्ये न किंचिन्नमित्तं संभवेदित्यर्थः॥

ननु किमनेन नः पक्षेण प्राच्य एव पक्षोऽस्तु यत् प्रलयस्य वृत्तत्वाद्देहाद्यभावेऽपि चित्स्वभावत्वादणूनां ज्ञानं संभवत्येवेत्याह

**अथ प्रलयकालेऽपि चित्स्वभावत्वयोगतः ॥ ३० ॥**
**अणूनां संभवत्येव ज्ञानं मिथ्येति तत्कुतः।**
**स्वभावादिति चेन्मुक्ते शिवे वा किं तथा नहि ॥ ३१ ॥**

भवतु नामैषां ज्ञानं, मिथ्यात्वं पुनः कुतस्त्यमित्युक्तं 'मिथ्येति तत्कुतः' इति। अथ ज्ञानत्वादेव ज्ञानस्य मिथ्यात्वं तच्चित्स्वभावत्वाविशेषान्मुक्ताणूनां शिवस्यापि वा कथं न मिथ्याज्ञानयोग इत्याह 'मुक्ते शिवे वा किं तथा नहि' इति॥ ३१॥

नन्विह सामान्येनाज्ञानं न विवक्षितं किंतु प्रकृतिपुरुषविवेकादर्शनरूपं यथा सांख्यैराख्यातं, तदेवाह

**यच्चादर्शनमाख्यातं निमित्तं परिणामिनि।**
**प्रधाने तद्धि संकीर्णवैविक्त्योभययोगतः ॥ ३२ ॥**
**दर्शनाथ पुमर्थैकयोग्यतासचिवं धियः।**
**आरभ्य सूते धरणीपर्यन्तं तत्र यच्चितः॥ ३३ ॥**
**बुद्धिवृत्त्यविशिष्टत्वं पुंस्प्रयाशप्रसादतः।**
**प्रकाशनाद्धियोऽर्थेन सह भोगः स भण्यते ॥ ३४ ॥**

प्रधाने परिणामिनि निमित्तमिति तत्तद्बुद्ध्यादिरूपतया प्रधानपरिणामार्थमित्यर्थः। तदेव च भोगापवर्गमयसांकर्यवैविक्त्यदर्शनाय भवेदित्युक्तं

'तद्धि संकीर्णवैविक्त्योभययोगतो दर्शनाय' इति । यदाहुः

'विना सर्गेण बन्धो हि पुरुषस्य न युज्यते ।
सर्गस्तस्यैव मोक्षार्थे .... .... .... .... ॥'

इति । तत्र परिणामित्वं तावदाह 'पुमर्थेत्यादि' । पुंसः प्रधानकैवल्यावधिपरिच्छिन्ने सांकर्यदर्शनात्मन्यर्थे येयमेकानन्यसाधारणा कार्यजननाभिमुख्यलक्षणा योग्यता तत्सचिवं तत्सहकृतमित्यर्थः । तदुक्तम्

पुरुषस्य दर्शनार्थः कैवल्यार्थस्तया प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥
'प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥' (सां० का० २२)

इति । नन्वेव परिणमतु प्रधानं सांकर्येण वैविक्त्येन वा, दर्शनं पुनरत्र किं नामोच्यते, इत्याशङ्क्याह 'तत्रेत्यादि' । तत्रैवं प्रधानस्य परिणामे पुंस्प्रकाशसंक्रान्तिमहिम्ना तत्तदर्थाकाराया बुद्धेराचैतन्येऽपि चेतनायमानतयावस्थानाद्यञ्जितः पुरुषस्यौदासीन्येऽपि स्वच्छायासंक्रान्तिद्वारेणोभयतो निर्मलदर्पणप्रख्याया बुद्धेरिदमहं जानामीत्येवमात्मिकया वृत्त्या कर्तृतयेवाभिमानात्सारूप्यं स एव विषयच्छायायोगिन्यां बुद्धौ चिच्छायासंक्रान्तेः सांकर्यदर्शनात्मा भोगो भण्यते,—इति वाक्यार्थः । यदुक्तम्

'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥' (सां० का० २०)

इति ॥ ३४ ॥

एवं सांकर्यमभिधाय वैविक्त्यं व्यनक्ति

**बुद्धिरेवास्ति विकृतिधर्मिकान्यस्तु कोऽप्यसौ ।**
**मद्विलक्षण एकात्मेत्येवं वैविक्त्यसंविदि ॥ ३५ ॥**
**पुमर्थस्य कृतत्वेन सहकारिवियोगतः ।**
**तं पुमांसं प्रति नैव सूते किंत्वन्यमेव हि ॥ ३६ ॥**

विकृतिधर्मेत्यनेनास्याः परिणामित्वादाचैतन्याद्युक्तम्, अत एव पुंसश्चेतनत्वादियोगात् एतद्वैलक्षण्यं कटाक्षयितुं कोऽपीति मद्विलक्षण इति चोक्तम् । यदाहुः

'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥'(सां० का० ११)

इति । वस्तुतः प्रकृतिपुरुषयोरुपरतविषयच्छायायां बुद्धौ निष्कम्पदीपशिखाप्रख्यकेवलचिच्छायासंक्रान्तिर्नाम वैविक्त्यज्ञानमुच्यते, यत्रेदमुपचर्यते प्रकृतिरन्या पुरुषोऽन्यश्चेति । यदुक्तम्

'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥' (सां० का० ६४)

इति । एवं चोभयथा दर्शनात्मनः पुमर्थस्य कृतत्वात् अत एव पुमर्थकयोग्यतात्मनः सहकारिणो वियोगात्तं प्राप्तविवेकज्ञानं पुरुषं प्रति नैव सूते प्रतिनिवृत्तप्रसवा भवतीत्यर्थः । यदुक्तम्

तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरतैका ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥' (सां० का० ६६)

इति । न चैवं निवृत्तप्रसवत्वात् प्रकृतेरविशेषेणैव सर्वेषां निर्मोक्षप्रसङ्ग इत्युक्तं किंत्वन्यमेव हीति । अन्यमित्यप्राप्तविवेकज्ञानमित्यर्थः ॥

एतदेव संक्षेपेण प्रतिक्षेप्तुमुपक्षिपति

**अत्र पुंसोऽथ मूलस्य धर्मोऽदर्शनता द्वयोः ।**
**अथवेति विकल्पोऽयमास्तामेतत्तु भण्यताम् ॥ ३७ ॥**

एतद्धि यदि नामादर्शनात्मकमज्ञानं पुंसो धर्मस्तत्तस्य नित्यमेव बन्धे ज्ञानोदये वा विकारित्वादाचैतन्यम्, प्रकृतेश्च तद्धर्मत्वे पुंसः किमायातं येन तस्य बन्ध इति सदैवास्य निर्मोक्षः स्यात्, उभयधर्मत्वे चोभयथापि दूषणोपनिपात इत्यादि विविच्यमानमतिगहनत्वात् वस्तुतस्तु व्याहतिनिमित्तत्वमियादित्याशयः । एतत् परं वक्ष्यमाणदृशा मया चोद्यमानं निर्णीयतामित्युक्तम्—एतत्तु भण्यतामिति ॥ ३७ ॥

तदेवाह

**भोगो विवेकपर्यन्त इति यत्तत्र कोऽवधिः ।**
**विवेकलाभे निखिलसूतिदृग्यदि सापि किम् ॥ ३८ ॥**

**सामान्येन विशेषैर्वा प्राच्ये स्यादेकजन्मतः ।**
**उत्तरे न कदाचित्स्याद्भाविकालस्य योगतः ।। ३९ ।।**

यदभिप्रायणैव

'कैवल्यार्थं प्रवृत्तेश्च' (सां० का० १७)

इत्याद्युक्तम् । यदि नाम निखिलसूतिसंपत्तिरेव विवेकलाभे सूत्यन्तरसम्पत्त्ययोगादवधिः । तत्किं सापि सूतिमात्रात्मना वा स्यात् पार्थिवघटाद्यात्मविशिष्टसूत्याद्यात्मना वेत्याह सा किं सामान्येन विशेषैर्वेति । न चेतदुभयमपि सङ्गच्छते,—इत्याह प्राच्य इत्यादि । एकजन्मत इति, एकस्यामपि व्यक्तौ सामान्यस्य कात्स्न्येनैव वृत्तेः । न कदाचिदिति, भाविनां सूतिविशेषाणामानन्त्यात् ।। ३९ ।।

ननूत्तर एव पक्षोऽस्तु आनन्त्यचोद्यं तु निःशेषविशेषानवलम्बनात् कतिपयविशेषाश्रयणाञ्च न स्यादित्याशङ्कते

**कैश्चिदेव विशेषैश्चेत्सर्वेषां युगपद्भवेत् ।**
**विवेकोऽनाविसंयोगात्का ह्यन्योन्यं विचित्रता ।। ४० ।।**

इह खलु प्रकृतिसंयोगानादित्वस्य तुल्यत्वात् सर्वेषामेव पुरुषाणां प्रकृतिनियतविशेषसूतिसंपत्तिसामन्तर्येण युगपददूरविप्रकर्षेण वा तद्विवेक उदियाच्छरदीव शालिस्तम्बानां पाक इत्येषां परस्परस्य वैचित्र्यान्तरायोगात् क्रमेण भोगापवर्गौ न स्यातामिति न सांख्योक्तमप्यज्ञानं नैयायिकतामवलम्बते ।। ४० ।।

अत आह

**तस्मात्सांख्यदृशापीदमज्ञानं नैव युज्यते ।**

सांख्यदृशापीत्यपिशब्देन न केवलं प्रागुक्तक्रमेणैतन्न युज्यते यावदनेनापि मतेनेत्युक्तम् ।।

नन्विह भोगापवर्गमात्रमेवोपादेयमिति तदेव विविच्यतां, किमज्ञानयुक्तायुक्तत्वकथनेनेत्याशङ्क्याह

**अज्ञानेन विना बन्धमोक्षौ नैव व्यवस्थया ।। ४१ ।।**
**युज्येते तच्च कथितयुक्तिभिर्नोपपद्यते ।**

व्यवस्थयेति 'अयं बद्धोऽयं मुक्त' इति ।। ४१ ।।

ननु माभूदज्ञानं युक्तामयुक्तं वा किमनया नश्चिन्तया यदणूनां मायासद्भावादेव बन्धमोक्षविभागः सिद्धयेदित्याशङ्क्याह

**मायाकर्माणुदेवेच्छासद्भावेऽपि स्थिते ततः ॥ ४२ ॥**
**न बन्धमोक्षयोर्योगो भेदहेतोरसंभवात् ।**

देवेच्छेति, ईश्वरशक्त्यधिष्ठानं विना हि मायादि जाड्यात्किंचिदपि कर्तुं न शक्नुयादित्याशयः । तत इत्यज्ञानस्यायौक्तिकत्वात् । योगो युक्तिः । भेदहेतोरसंभवादिति, नहि मायादीनां प्रति पुंनियतत्वादीश्वरस्यं च वीतरागद्वेषत्वादयं बद्धोऽयं मुक्त इति विभागे किंचिन्निमित्तं संभवेदिति भावः ॥ ४२ ॥

एवमणूनां ज्ञत्वकर्तृत्वप्रतिबन्धकमज्ञानशब्दवाच्यं किंचिदावरणं वक्तव्यं, येनायं बद्धोऽयं मुक्त इति विभागो भवेदित्याह

**तस्मादज्ञानशब्देन ज्ञत्वकर्तृत्वधर्मणाम् ॥ ४३ ॥**
**चिदणूनामावरणं किंचिद्वाच्यं विपश्चिता ।**

अज्ञानशब्देनेति यदुक्तम्

'मलोऽज्ञानं पशुत्वं च तिरस्कारस्तमः ।
अविद्या ह्यावृतिर्मूर्च्छा पर्यायास्तत्र चोदिताः ॥'

इति ॥ ४३ ॥

तच्च कीदृगित्याह

**आवारणात्मना सिद्धं तत्स्वरूपाभेदवत् ॥ ४४ ॥**
**भेदे प्रमाणाभावाच्च तदेकं निखिलात्मसु ।**

स्वरूपादभेदवदिति अवयविवन्निरंशात्मकमित्यर्थः । एवमप्यवयविनामानैक्ये प्रमाणमस्ति कारणभेदो नाम, नेह तथेत्युक्तं भेदे प्रमाणाभावात्तदेकमिति । निखिलात्मसु इति बहुवचननिर्देशादेकमपीदं बहुशक्तिकमन्यथा ह्यस्य निखिलात्मावारकत्वं न घटेत, एकमुक्तौ वा सर्वे मुच्येरन्निति । यदाहुः

'मलशक्तयो विभिन्नाः प्रत्यात्मानं च तद्गुणावरिकाः ।'

इति ॥ ४४ ॥

तच्चैवंविधं किं नित्यं कार्यं वा, कार्यं चेत्तत्कुतोऽस्य प्रसव इत्याह

**तच्च कस्मात्प्रसूतं स्यान्मायातश्चेत्कथं नु सा ॥ ४५ ॥**

**क्वचिदेव सुवीतंतन्न तु मुक्तात्मनीत्ययम् ।**

**प्राच्यः पर्यनुयोगः स्यान्निमित्तं चेन्न लभ्यते ॥ ४६ ॥**

**उत्पत्त्यभावतस्तेन नित्यं न च विनश्यति ।**

मायातश्चेदस्य प्रसवस्तत्सर्वान् प्रत्येवासावेतत् सुवीत न कंचिदेव वा प्रतीति, तदाह मायातश्चेदित्यादि । ततश्च बद्धाणुवन्मुक्ताणून् प्रत्यप्यविशेषेणासावेतत् सुवीत,—इति प्राच्य एवायं पर्यनुयोगः परापतेत् । तथाहि ज्ञानत्वादेव ज्ञानस्य मिथ्यात्वे, तत्स्वभावत्वाविशेषात् मुक्ताणुष्वपि तद्योग इत्युक्तं प्राक्. नहि वस्तु भवत्पक्षपाति भवेदिति भावः । अथास्य नास्ति किंचिन्निमित्तं, तर्हि नित्यमेवास्त्वित्याह निमित्तमित्यादि । तेनेति निमित्तालाभेन, उत्पत्त्यभावे चायं हेतुः तन्निमित्ताभावादुत्पत्त्यभावः,—तस्माच्चेदं नित्यमिति नित्यत्वादेव चेदं न विनश्वरमित्युक्तं न च विनश्यतीति ॥ ४६ ॥

न केवलं नित्यत्वादेव नैतद्विनश्यति यावन्निमित्तान्तरादपीत्याह

**तत एवैकतायां चान्यात्मसाधारणत्वतः ॥ ४७ ॥**

तत एव भेदे प्रमाणाभावलक्षणात् प्रागुक्ताद्धेतोरेकतायां सत्यां स्वपरसाधारणत्वाच्चैतन्न विनश्यतीति प्राच्येन सम्बन्धः । अस्य ह्येकत्वेन सर्वसाधारण्यादेकत्र नाशे सर्वत्रैवासौ स्यादिति युगपदेव सर्वे मुच्येरन्नित्यभिप्रायः ॥

नन्वेतज्ज्ञानाभावमात्ररूपत्वान्न किंचिदिति किमनेन तुच्छेन कृत्यमित्याशङ्क्याह

**न वावस्त्वर्थकारित्वान्न चित्तत्संवृतित्वतः ।**

अर्थकारित्वादिति पुमावरणलक्षणायामर्थक्रियायामस्य कर्तृत्वादित्यर्थः । न चैवमप्यस्य ज्ञानमेव रूपमित्युक्तं न चित्तत्संवृतित्वतः इति । नहि चिदेव चिदावरिका भवेदिति भावः ॥ ४७ ॥

ननु भवतु नामैतत्, आत्मनां पुनरनेन किंकारणकः सम्बन्ध इत्याशङ्क्याह

**न चैतेनात्मनां योगो हेतुमांस्तदसंभवात् ॥ ४८ ॥**

तदसंभवादिति परिकल्प्यमानो हि हेतुः किं निर्मलान् पुंसः प्रति मलं योजयेदुत समलान् । तत्राद्ये पक्षे निर्मलत्वाविशेषाच्छिवमुक्ताणून् प्रत्यपि योजयेत् शिववद्वा न कंचिदपि प्रतीति । द्वितीयस्मिन् पुनर्व्यर्थं तद्योजनं ततः पूर्वमपि समलत्वात्, अतश्चात्मनामनादिरेव तत्सम्बन्ध इति सिद्धम् । यदाहुः

'अनाद्यनादिसम्बन्धो मल.................... ।'

इति । आगमोऽपि

'अनादिमलसम्बन्धाद् ........................ ।'

इत्याद्युपक्रम्य

'विशुद्धं स्फटिकं कस्मात्कस्मात्ताम्रं सकालिकम् ।
यथा तत्र निमित्तं नो तथा शुद्धशिवात्मनोः ॥'

इति ॥ ४८ ॥

एतदेव व्यस्ततयोक्तमाणमलस्वरूपं सामस्त्येनोपसंहारदिशानुवदन् मलान्तरकारणत्वं तस्यैव विधातुमाह

**तेनैकं वस्तु सन्नित्यं नित्यसंबद्धमात्मभिः ।**
**जडं मलं तदज्ञानं संसाराङ्कुरकारणम् ॥ ४९ ॥**

तदेवंविधमाणवं मलं संसारस्य

'शरीरभुवनाकारं मायीयम्................ ।

इत्यादिना निरूपितस्य मायीयमलस्याङ्कुर इवाङ्कुरः कारणं कार्मं मलं तस्य कारणं मलद्वयस्यापि साक्षात्पारम्पर्येण च निमित्तमित्यर्थः । यदुक्तम्

'मलः कर्मनिमित्तं तु नैमित्तिकमतः परम् ।'

इति ॥ ४९ ॥

नन्वेवंविधं मलं चेन्नित्यमणुभिर्वा नित्यमेव संबद्धं, तन्न कदाचिदपि संसारः शाम्येदित्यानिर्मोक्ष एव प्रसजेदित्याशङ्क्याह

**तस्य रोद्ध्री यदा शक्तिरुदास्ते शिवरश्मिभिः ।**
**तदाणुः स्पृश्यते स्पृष्टः स्वके ज्ञानक्रिये स्फुटे ॥ ५० ॥**
**समाविशेदयं सूर्यकान्तोऽर्केणेव चोदितः ।**

उदास्ते इति स्वस्मान्निरोधाख्याद्व्यापारान्निवर्तते इत्यर्थः। स्पृश्यते इति शिवशक्तिपातभाग्भवेदित्यर्थः। तेन यथार्करश्मिस्पृष्टः सूर्यकान्तः स्वकामभिज्वलनलक्षणां क्रिया समाविशत् तथायमपि शिवशक्तिपातपूतः स्वके पूर्णे ज्ञानक्रिये, समभिव्यक्तस्वसंविद्वैभवो भवेदित्यर्थः॥

ननु यद्येवं तत्कथं शुद्धात्मनामपि पूर्णनिजज्ञानक्रियासमावेशाविशेषात् स्वरूपाभिव्यक्तावन्योन्यस्य वैचित्र्यं स्यादित्याशङ्क्याह

**रौद्ध्र्याश्च शक्तेर्माध्यस्थ्यतारतम्यवशक्रमात्॥ ५१॥**

**विचित्रत्वमतः प्राहुरभिव्यक्तौ स्वसंविदः।**

अतः शिवरश्मिस्पर्शाद्धेतोरणूनां या स्वसंविदभिव्यक्तिस्तस्यां वैचित्र्ये मलसम्बन्धिन्या एव रोद्ध्र्याः शक्तेः स्वव्यापारौदासीन्यात्मनो माध्यस्थ्यस्य यत्तारतम्यं परात्परमतिशयस्तत्प्रयुक्तः क्रमो निमितं येनात्मनां शुद्धत्वेऽप्यन्योन्यस्य विशेषः॥ ५१॥

ननु सर्वत्र पारमेश्वरः शक्तिपात एव स्वसंविदभिव्यक्तौ निमित्तमित्यादिष्टं तत्कथमिह रोधशक्त्यौदासीन्यात्मा मलपरिपाक एवोक्त इत्याशङ्क्याह

**स एष शक्तिपाताख्यः शास्त्रेषु परिभाष्यते॥ ५२॥**

स इति मलपरिपाकहेतुकः प्रक्रान्तः शिवरश्मिस्पर्शः। एष इति समनन्तरमेव प्रत्यक्षतया परामृष्टः। परिभाष्यते इति श्रीमत्खेटपालाचार्यप्रभृतिभिः स्वसमयेनावस्थाप्यते इत्यर्थः॥ ५२॥

एवं परकीयं शक्तिपातविधिं प्रदर्श्य निराकरोति

**अत्रोच्यते मलस्तावदित्थमेष न युज्यते।**

**इति पूर्वाह्निके प्रोक्तं पुनरुक्तौ तु किं फलम्॥ ५३॥**

इत्थमुक्तेन रूपेण। पूर्वाह्निक इति नवमाह्निकादौ। पुनरुक्तौ किं फलमिति तदतिरिक्तं तु किंचिद्विवेच्यमित्याशयः॥ ५३॥

तदेवाह

**मलस्य पाकः कोऽयं स्यान्नाशश्चेदितरात्मनाम्।**

**स एको मल इत्युक्तेर्नैर्मल्यमनुषज्यते॥ ५४॥**

**अथ प्रत्यात्मनियतोऽनादिश्च प्रागभाववत् ।**
**मलो नश्येत्तथाप्येष नाशो यदि सहेतुकः ।। ५५ ।।**
**हेतुः कर्मेश्वरेच्छा वा कर्म तावन्न तादृशम् ।**

पाकः कोऽयमिति, न तु मल एव स हि स्वरूपतः पूर्वमेव निराकृतप्राय इत्यभिप्रायः। एको मल इति, एकत्वे हि मलस्यैकत्रापि तन्नाशे सर्वेषामप्यसौ स्यादिति युगपदेव विश्वनिर्मोक्षप्रसङ्गः। न च रोद्ध्र्याः शक्तेरानैक्यं युज्यते,—इत्युपपादितं पूर्वं येनापि युगपन्मुक्तपरिहारकदशा स्यात्, अयमेव वा प्रत्यात्मनियत इष्यतां येन नैवं कश्चिद्दोषः इत्युक्तम् 'अथ प्रत्यात्मनियत' इति। ननु भवतु नामैवमनियतो नियतो वा मलस्तस्य पुनरनादित्वात्कथं नाशो युज्येतेत्याशङ्क्याह प्रागभाववदनादिरपि मलो नश्येदिति। अनादिरपि हि प्रागभावः कार्योत्पादान्नश्येदित्याशयः। यदि चानादेरयुक्तोऽपि नाशोऽभ्युपगम्यते तत्किमसौ सहेतुको निर्हेतुको वा?। सहेतुकत्वे च को हेतुरित्याह तथापीत्यादि। तत्र तावत्कर्मणो हेतुत्वं [न] न्याय्यमित्याह कर्मेत्यादि तादृशमिति मलनाशहेतुभूतं तस्य भोगैकहेतुत्वात्। नापीश्वरेच्छायाः, सापि किं स्वतन्त्रा तद्धेतुरुत परतन्त्रा [न तावत्परतन्त्रा] मलकर्मपाकतारतम्यातिरिक्तस्यापेक्षणीयस्याभावात्। मले च नास्ये तदयोगात्। नापि स्वतन्त्रा ईश्वरस्य वीतरागद्वेषत्वात्सर्वान्प्रत्यविशेषेणैव तथाभावापत्तेः ॥ ५५ ॥

तदाह

**ईश्वरेच्छा स्वतन्त्रा च क्वचिदेव तथैव किम् ।। ५६ ।।**

अहेतुत्वे चास्य द्वितीयलक्षणपरिसंख्यातो नाशः, इत्यनारब्धपरिसमाप्त एव संसारः स्यादित्याह

**अहेतुकोऽस्य नाशश्चेत्प्रागेवैष विनश्यतु ।**

प्रागेव विनश्यत्विति, स्थित्यन्तरमेवैष मा दर्शीत्यर्थः ॥

अथोच्यते निरन्तरसुसदृशक्षणान्तरसन्ततिवृत्त्या ध्वस्तोऽप्यध्वस्त इवास्ते येनादर्शनं न यायादित्याह

**क्षणान्तरं सदृक् सूते इति चेत्स्थिरतैव सा ।। ५७ ।।**

एवं हि सन्तानवृत्त्या निरपेक्षतया क्षणान्तरमारभमाणो नतु विच्छेदमधिगच्छेदित्युक्तं स्थिरतैव सेति। न हि अस्यान्त्यस्येव घटक्षणस्य सामग्र्यन्तरोपनिपातः संभाव्यते येन विसदृशकार्योत्पादे निरन्वयो नाशः स्यात् ॥ ५७ ॥

एतच्च मलस्य नाशमभ्युपगम्योक्तं, वस्तुतस्त्वसावस्य न स्यादित्याह

**न च नित्यस्य भावस्य हेत्वनायत्तजन्मनः ।**
**नाशो दृष्टः प्रागभावस्त्ववस्त्विति तथास्तु सः ॥ ५८ ॥**

हेत्वनायत्तजन्मनश्च प्रागभावस्य नाशो दृश्यते इति किमेतदुक्तमित्याशङ्क्याह प्रागभावस्त्ववस्त्विति। तथास्तु स इति प्रागभावे हि अवस्तुत्वान्न काचिन्नियमेन व्यवस्था स्यात्, भावे त्वयं नियमो यदनादेरानन्त्यमिति ॥ ५८ ॥

अथ मलस्य न नाशः पाकः किंत्वस्य शक्तिप्रतिबन्धो नामेत्याह

**अथास्य पाको नामैष स्वशक्तिप्रतिबद्धता ।**
**सर्वान्प्रति तथैष स्याद्रुद्धशक्तिर्विषाग्निवत् ॥ ५९ ॥**
**पुनरुद्भूतशक्तौ च स्वकार्यं स्याद्विषाग्निवत् ।**
**मुक्ता अपि न मुक्ताः स्युः शक्तिं चास्य न मन्महे । ६० ।**

यदि नामास्य स्वशक्तिप्रतिबन्ध एव पाकस्तद्यथा विषमग्निर्वा प्रतिरुद्धमरणदाहशक्ती सर्वान्प्रति अविशेषेणैव स्यातां, तथायमपि प्रतिरुद्धरोधकशक्तिरिति युगपदेव सर्वे मुच्येरन्। एवं च केनापि निमित्तेन प्रतिबन्धकनिवृत्तौ यद्यस्य विषाग्निवत् पुनरपि स्वा शक्तिरुन्मज्जेत् तत्सर्वान्प्रति अविशिष्टैवासौ स्यादिति महतायासेन मुक्ता अप्यकस्मादेव बद्धा भवेयुस्तान्प्रति प्रतिप्रसवन्यायेन निरोधकत्वस्य संभाव्यमानत्वात्, अतश्च बन्धमोक्षौ प्रति न कस्यचिदपि दाढर्यं भवेत्,—इति को नाम प्रेक्षापूर्वकारी बन्धं हातुं मोक्षं चोपादातुमुद्यच्छेत्। किंनामधेया चास्य शक्तिरिति न बुद्ध्यामहे यस्या अपि प्रतिबन्धो नामास्य पाकः स्यादित्याह 'शक्तिं चास्य न मन्महे' इति ॥ ६० ॥

अथोच्यते रोधिकास्य शक्तिरिति तत्किमसौ रुन्ध्यादित्याह

**रोद्ध्रीति चेत्कस्य नृणां ज्ञत्वकर्तृत्वयोर्यदि ।**

यद्येवं, तदस्याः किं संनिधिमात्रेण तद्रोधकत्वमुत किंचित्करत्वेनत्याशङ्कयाह

**सद्भावमात्राद्रोद्धृत्वे शिवमुक्ताण्वसंभवः ॥ ६१ ॥**

तत्र संनिधिमात्रेणैवास्या रोधकत्वे तत्संनिधानस्याविशेषाद् विमुक्ताणून्प्रत्यपि तथा स्यादिति सर्वमिदमन्धमूकप्रायं बद्धमेव जगत्स्यात् ॥ ६१ ॥

द्वितीयमपि पक्षं प्रतिक्षेप्तुमाह

**संनिधानातिरिक्तं च न किंचित्कुरुते मलः ।**
**आत्मना परिणामित्वादनित्यत्वप्रसङ्गतः ॥ ६२ ॥**

यदि नाम हि संनिधानातिरेकेण मलस्तच्छक्तिर्वा कंचिदप्यतिशयमात्मनामादध्यात् तत्तेषां विकारित्वादनित्यत्वं प्रसजेदिति स्वसिद्धान्तभङ्गो भवेत् ॥ ६२ ॥

ननु न किंचिदप्यात्मनां मलः कुर्यात् किंतु तत्समवेतं ज्ञत्वकर्तृत्वाद्यावृणुयाद् येनैषां बद्धत्वमुच्यते,—इत्याशङ्कयाह

**ज्ञत्वकर्तृत्वमात्रं च पुद्गला न तदाश्रयाः ।**
**तच्चेदावारितं हन्त रूपनाशः प्रसज्यते ॥ ६३ ॥**

नहि वैशेषिकानामिव भवतां धर्मधर्मिणोः कश्चिद्भेदो येन ज्ञत्वकर्तृत्वयोराश्रया आत्मानः,—इति तदावरणेनात्मनां किमिति स्यात्, किंतु ज्ञानक्रिये एवात्मनां रूपं तत्तदावरणमात्रादेवैषां रूपनाशः प्रसजेदित्युक्तमेव प्राक्

'विभोर्ज्ञानक्रियामात्रसारस्याणुगणस्य च ।
तदभावो मलो रूपध्वंसायैव प्रकल्पते ॥'
धर्माद्धर्मिणि यो भेदः समवायेन चैकता ।
न तद्भवद्भिरुदित कणभोजनशिष्यवत् ॥ ( तं० ९।७५ )

इति ॥ ६२ ॥

इह च मलेन ज्ञानक्रिययोरावरणं नाम पटेनेव घटस्य द्रष्टारं प्रत्यप्रकाशनमुच्यते, तच्च वस्तुनो नावस्तुतामाधातुं शक्नुयाद् येन ज्ञानस्याज्ञानत्वं स्यात् । ततश्च सर्वं एव मुक्ता भवेयुर्बद्धा वा इति, सत्यपि मले न काचिद्बन्धमोक्षव्यवस्था सिद्धयेत्, तदाह

**आवरणं चादृश्यत्वं न च तद्वस्तुनोऽन्यताम् ।**
**करोति घटवज्ज्ञानं नावरीतुं च शक्यते ॥ ६४ ॥**

अत्र न केवलमेवं यावदावरणमेव न संभवति,—इत्याह घटवदित्यादि । न हि मूर्तेनामूर्तेन वा मलेनामूर्तस्य ज्ञानस्यावरणं घटते तद्धि मूर्तस्यैव मूर्तेनभवेदिति भावः । क्रिया च ज्ञानपल्लवप्रायेति च नात्र तस्याः पृथगुपादानम् ॥ ६४ ॥

प्रत्युतास्यावरणायायातो मलो ज्ञेयः स्यादिति ज्ञातृत्वमेवोत्तेजितं भवेदित्याह

**ज्ञानेनावरणीयेन तदेवावरणं कथम् ।**
**न ज्ञायते तथा च स्यादावृतिर्नाममात्रतः ॥ ६५ ॥**

आवरणीयेनेत्यावार्यतयाभिमतेनेत्यर्थः । आवरणमिति तात्कर्म्यान्मिलम् । अतश्चैतदतिरस्कृतत्वान्मलवदेव सर्वमपि जानीयादिति सर्वः सर्वज्ञो भवेत्,—इति वस्तुशून्यं शब्दैकमात्रशरणमावरणमुक्तं स्यादित्युक्तं 'तथा च स्यादावृतिर्नाममात्रतः' इति ॥ ६५ ॥

यदि च नामास्य स्वशक्तिप्रतिबन्ध एव पाकस्तत्कोऽस्याः प्रतिबन्धकः, ईश्वरश्चेत्किमसौ निरपेक्षः प्रवर्तते किमुत कर्मसाम्यमपेक्ष्येति, निरपेक्षश्चेत् सर्वान्प्रत्येव तथा स्यादित्याह

**रोद्ध्र्याश्च शक्तेः कस्तस्य प्रतिबन्धक ईश्वरः ।**
**यद्यपेक्षाविरहितस्तत्र प्राग्दत्तमुत्तरम् ॥ ६६ ॥**

दत्तमिति । यदुक्तम्

'ईश्वरेच्छा स्वतन्त्रा च क्वचिदेव तथैव किम्' । ( तं० १३।५६ )

इति ॥ ६६ ॥

उत्तरस्मिन् पुनः पक्षे कर्मणां साम्यमेव किमुच्यते यदपेक्ष्यास्य प्रवृत्तिः स्यादित्याह

**कर्मसाम्यमपेक्ष्याथ तस्येच्छा संप्रवर्तते ।**
**तस्यापि रूपं वक्तव्यं समता कर्मणां हि का ॥ ६७ ॥**

तदेवाह

**भोगपर्यायमाहात्म्यात्काले क्वापि फलं प्रति ।**
**विरोधात्कर्मणी रुद्धे तिष्ठतः साम्यमीदृशम् ।। ६८ ।।**

इह भोगक्रममहिम्ना बहुषु कर्मसु क्षीणेषु क्वाप्यनियते काले यत्परिपक्वेऽपि तुल्यफलविरुद्धे कर्मणी विरोधात्फलं प्रति रुद्धे तिष्ठतः प्रातिस्विकं प्रतिनियतं भोगं दातुमुदासाते, तदनन्तरभावीनि कर्माणि चापरिपक्वत्वाद् अर्थाद्भोगाय नोन्मुखीभवन्ति, तदीदृशं विरुद्धकर्मद्वयविरोधलक्षणं कर्मणां साम्यमुच्यते,—इति वाक्यार्थः ॥ ६८ ॥

ननु भवतु नामैवं कर्मसाम्यं, का पुनरीश्वरस्य एतदपेक्षा,—इत्याशङ्क्याह

**तं च कालांशकं देवः सर्वज्ञो वीक्ष्य तं मलम् ।**
**रुन्द्धे लक्ष्यः स कालश्च सुखदुःखादिवर्जनैः ।। ६९ ।।**

तमिति रुद्धविरुद्धकर्मोपलक्षितं, तदवेक्षणे च विशेषणद्वारेण सर्वज्ञत्वं हेतुः । नन्वेवंविधस्यास्य कालस्यास्तित्वे किं प्रमाणमित्याशङ्क्याह 'लक्ष्यः' इत्यादि । स चैवंविधः कालः सुखादिवर्जनैर्लक्ष्यः, सर्वेषामेव सुखदुःखाद्यनुभवशून्यतया स्वसंवेदनसिद्ध इत्यर्थः ॥ ६९ ॥

एतदेव हि प्रतिक्षिपति

**नैतत्क्रमिकसंशुद्धव्यामिश्राकारकर्मभिः ।**
**तथैव देये स्वफले केयमन्योन्यरोद्धृता ।। ७० ।।**

इह हि त्रिविधानि कर्माणि शुभान्यशुभानि शबलानि च । तत्र शुभमशुभं च कर्म प्रतिनियतरूपत्वात् संशुद्धाकारं, शबलं पुनरनियतरूपत्वाद् व्यामिश्राकारं, तेषां क्रमिकत्वमेव न्याय्यं परस्परपरिहृतस्वरूपतया युगपदवस्थानायोगात् । अतश्च क्रमेणैव स्वमपि फलं ददाति, एषां का नाम फलं प्रत्यन्योन्यस्य रोद्धृता कस्मिंश्चिदपि कालक्षणे युगपत्प्रवृत्त्ययोगात्, एषां हि अनुष्ठानेऽवस्थाने फलदाने च क्रमिकैकजीवितत्वमेवेत्युक्तं बहुशः ॥ ७० ॥

भवतु नाम वैतत्क्वापि काले फलं प्रति विरुद्धे कर्मणी रुद्धे तिष्ठत इति, तत्र पुनरन्तरा ततोऽन्यत्कर्म किंचित्किं फलेन्नवा ? यदि फलेत् कृतं तन्निरोधेन प्राग्वदेव कर्मणामानुपूर्व्येण फलदानावस्थितेः, अथ न फलेत्तज्जात्यायुष्प्रदमपि कर्म न फलेदिति तदेव सर्वस्य देहपातः, तत्कृतं मलशक्ति-

प्रतिबन्धेन,—इत्याह

**रोधे तयोश्च जात्यायुरपि न स्यादतः पतेत्**

**देहो, भोगदयोरेव निरोध इति चेन्ननु ।। ७१ ।।**

**जात्यायुष्प्रदकर्मांशसंनिधौ यदि शंकरः**

**मलं रुन्द्धे भोगदातुः कर्मणः किं बिभेति सः ।। ७२ ।।**

ननु केनेदमुक्तं जात्यायुष्प्रदमपि कर्म तदा न फलेदिति भोगदकर्माभिप्रायेण खल्वेतद्विवक्षितमित्याशङ्कते 'भोगदयोरेव निरोध इति चेत्' इति । नन्वेवं जात्यायुष्प्रदकर्मानिरोधेऽपि यदीश्वरो मलं निरुन्ध्यात् तद्भोगदस्यापि कर्मणो निरोधमनपेक्ष्यैव मलं रुणद्धु, किं तस्माद्बिभेति यद्यत्तन्निरोधमवश्यमपेक्ष्यते,—इत्याह 'ननु' इत्यादि ।। ७२ ।।

न चैतदैकान्तिकं यत्सुखदुःखाद्यनुभवशून्ये कर्मसाम्यत्मनि कालक्षण एवेश्वरो मलशक्तिं रुणद्धि,—इति शतशोऽप्येवमनुभवे हि न कैश्चिदपि मलशक्तिनिरोधहेतुकपारमेश्वरशक्तिपातचिह्नं किंचन संचेत्यते,—इति, तदाह

**शतशोऽपि ह्लादतापशून्यां संचिन्वते दशाम् ।**

**न च भक्तिरसावेशमिति भूम्ना विलोकितम् ।। ७३ ।।**

ह्लादतापौ सुखदुःखे, भक्तिरसावेशमिति, भक्तिर्हि नाम शक्तिपातस्य प्रथमं चिह्नम् । यदुक्तम्

'तत्रैतत्प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला ।' (मा० वि० २।१४)

इति ।। ७३ ।।

इदानीं सर्वतः प्रच्यावितस्य परस्य कुशकाशावलम्बनेन पक्षान्तरमाशङ्कते

**अथापि कालमाहात्म्यमपेक्ष्य परमेश्वरः ।**

**तथा करोति वक्तव्यं कालोऽसौ कीदृशस्त्विति ।। ७४ ।।**

कालमाहात्म्यमिति, कालस्य क्षणलवादिक्रमेण कल्पमहाकल्पपर्यन्तं वैचित्र्यमित्यर्थः । तथा करोति इति मलशक्तिं प्रतिबध्नीयादित्यर्थः । ननु यद्येवं तद्दिक्कालादीनां सर्वसाधारण्यादविशिष्टमेव कालस्य माहात्म्यमिति मलशक्तिप्रतिबन्धे कतरत्तावादीश्वरस्तदपेक्षते,—इति न जानीमः, —इत्युक्तं 'कीदृशोऽसौ कालः इति वक्तव्यम्' इति ।। ७४ ।।

तत्र हि सामान्येन तदपेक्षायां युगपदेव सर्वे मुच्येरन् विशेषश्चात्रान्वेष्यमाणो न लभ्यते,—इत्याह

**किं चानादिरयं भोगः कर्मानादि सपुद्गलम् ।**
**ततश्च भोगपर्यायकालः सर्वस्य निःसमः ।। ७५ ।।**

ततः कर्मतद्भोगपुद्गलादीनामनादित्वस्याविशेषाद् भोगक्रमे सर्वस्य पुद्गलस्य निःशेषेण दूरममि विप्रकर्षं परिहृत्य समः कालः स्यात् येन वृक्षफलानामिवर्तौ मलशक्तीनां सममेत्र सामनन्तर्येण वा पाक उदियादिति सर्वस्य मुक्तावविशेष एव प्रसजेत् ॥ ७५ ॥

स्यात् पुनरयं विशेषो, यदि कर्मादित्रितयान्यतरस्य कस्यचिदादिमत्त्वं भवेत् यदवधिकतयानेन कल्पं भुक्तमनेन तु कल्पद्वयम् अत एव च चिरक्षिप्रलक्षणात्प्रतिनियताद्भोगक्रमात्कर्मणामपि साम्यमित्याह

**आदिमत्त्वे हि कस्यापि वर्गादस्माद्भवेदियम् ।**
**वैचित्री भुक्तमेतेन कल्पमेतेन तु द्वयम् ।। ७६ ।।**
**इयतो भोगपर्यायात्स्यात्साम्यं कर्मणामिति ।**

न चैतद्भवतामिति सर्वथा सावद्यमेवैतत् ॥ ७६ ॥

एवं च न केवलमियदेव अवद्यं यावदन्यदपीत्याह

**अनेन नयबीजेन मन्ये वैचित्र्यकारणम् ।। ७७ ।।**
**जगतः कर्म यत्क्लृप्तं तत्तथा नावकल्पते ।**

अनेन इति समनन्तरोक्तेन कर्माद्यनादित्वाविशेषलक्षणेन इत्यर्थः । मन्ये इति संभावनायाम् ॥ ७७ ॥

तदनवकल्पनमेव उपपादयति

**अनादिमलसंच्छन्ना अणवो दृक्क्रियात्मना ।। ७८ ।।**
**सर्वे तुल्याः कथं चित्रां श्रिताः कर्मपरम्पराम् ।**

इह अणूनामनादिमलसंच्छन्नत्वात् अविशेष एव सर्वथा,—इति कर्मपरम्पराश्रयणेऽपि अविशिष्टत्वमेव एषां न्याय्यं तत्कर्मण एव वैचित्र्यं नास्ति,—इति कथं तज्जगद्वैचित्र्येऽपि निमित्ततामियात् ॥ ७८ ॥

अथात्र भोगलोलिका चेन्निमित्तं तत्तस्या अपि कुतस्त्यं वैचित्र्यमित्याह

**भोगलोलिकया चेत्सा विचित्रेति कुतो ननु ।। ७९ ।।**

सेति भोगलोलिका । ननु इति आक्षेपे ।। ७९ ।।

अथ भोगलोलिकाया अपि वैचित्र्ये कर्मवासनावैचित्र्यं निमित्तमित्युच्यते, तत्पुनरपि स एव दोषस्तद्वैचित्र्येऽपि किं निमित्तमितीत्याह

**अनादि कर्मसंस्कारवैचित्र्यादिति चेत्पुनः ।**
**वाच्यं तदेव वैचित्र्यं कुतो नियतिरागयोः ।। ८० ।।**
**महिमा चेदयं तौ किं नासमञ्जस्यभागिनौ ।**

अनादीति क्रियाविशेषणम् । तेन अनादि कृत्वा कर्मवासनावैचित्र्यात्सा विचित्रेत्यर्थः । एवं कर्मसंस्कारस्तावत्कर्माहित इति तद्वैचित्र्ये कर्मवैचित्र्यं निमित्तं, तत्रापि भोगलोलिका, तत्रापि कर्मसंस्कारवैचित्र्यं, तत्रापि कर्मवैचित्र्यम्,—इत्येवं विपरिवर्तमानो मूलक्षतिकारोऽयं दुरतिक्रमश्चक्रकचपातः। अथोच्यते नैतद्भोगलोलिकाया वैचित्र्ये निमित्तं, किंतु नियतिरागयोरिदं विजृम्भितम्,—इत्याह नियतीत्यादि । रागस्य हि किंचिन्मे भूयादिति भोगलोलिकैव रूपम् । इदमेव इति तु नियतेः रूपम् । ततस्तावेव भोगलोलिकवैचित्र्यकारिणाविति । एतदपि न, इत्याह तावित्यादि । नियतिर्हि तत्र तत्र विषयवैचित्र्येणैव नियच्छति, रागो वा रञ्जयति,—इति तद्वैचित्र्येऽपि अन्यनिमित्तमन्वेष्यम्, तत्राप्यन्यदिति मूलक्षतिकारिणी व्यक्तमनवस्थापतेत् ।। ८० ।।

अथ ईश्वरेच्छा कर्मवैचित्र्ये निमित्तमित्युच्यते, तदपि नेत्याह

**ईश्वरेच्छानपेक्षा तु भेदहेतुर्न कल्पते ।। ८१ ।।**

सा न तावत्सापेक्षा मलकर्मातिरिक्तस्य अपेक्षणीयस्य अभावात् कर्मवैचित्र्ये च कार्ये तदयोगात्, नापि अनपेक्षा ईश्वरस्य वीतरागद्वेषत्वात् सर्वान्प्रति अविशिष्टतया तद्वैचित्र्यानुपपत्तेः ।। ८१ ।।

ननु न कदाचिदनीदृशं जगदित्यादिवेदनादेव कर्मवैचित्र्यमेवमवस्थितम्,—इति किमनया निमित्तपर्येषणया इत्याह

**अथानादित्वमात्रेण युक्तिहीनेन साध्यते ।**
**व्यवस्थेयमलं तर्हि मलेनास्तु वृथामुना ।। ८२ ।।**

एवं तर्हि अनादि विचित्रं कर्मैव सर्वव्यवस्थासहिष्णु भविष्यति,—इति किं नाम अनेन व्यर्थेन मलेन अभ्युपगतेन इत्युक्तम् 'अलं तर्हि मलेनास्तु वृथामुना' इति ॥ ८२ ॥

एतदेव उपपादयति

**तथाहि कर्म तावन्नो यावन्माया न पुद्गले ।**
**व्याप्रियेत न चाहेतुस्तद्वृत्तिस्तन्मितो मलः ।। ८३ ।।**
**इत्थं च कल्पिते मायाकार्ये कर्मणि हेतुताम् ।**
**अनादि कर्म चेद्गच्छेत्किं मलस्योपकल्पनम् ।। ८४ ।।**

इह तावदेवंविधा व्यवस्था यदात्मनां प्रलयकालव्यवस्थायां यावन्मायीयो मलो न व्यापृतः तावत्कार्मं एव न संभवेत्, अन्यथा हि एषां पुनः कलादियोगो न घटेत । न चास्याहेतुकत्वं न्याय्यं नित्यं सत्त्वस्यासत्त्वस्य वा प्राप्तेः । तस्मात्कार्ममलान्यथानुपत्त्या तद्धेतुराणवाख्यो मलोऽनुमित इति । यदागमोऽपि

'निमित्तमभिलाषाख्यं नैमित्तिकमतः परम् ।'

इति । एवमपि मायापदवर्तिनि कर्मणि यदि अनादितद्वासनात्मकं कर्मैव हेतुतयाभ्युपगम्यते तद्व्यर्थं मलस्योपकल्पनमिति ॥ ८४ ॥

यदि नाम चैतदभ्युपगम्यते माभून्मल इति, तन्न काचन भवन्मते भोगापवर्गभूता कर्मव्यवस्था सिद्धयेत्,— इत्याह

**ननु माभून्मलस्तर्हि चित्राकारेषु कर्मसु ।**
**सन्तत्यावर्तमानेषु व्यवस्था न प्रकल्पते ।। ८५ ।।**

असति हि मले विचित्राकारतया सन्तन्यमानमपि कर्म जीवन्मुक्तमिव सर्वं प्रति अकिंचित्करमेव,—इति नास्य भोगहेतुतयावस्थानमवकल्पते, नापि अपवर्गहेतुतया । सा हि साम्ये सत्यस्य घटते । तच्च विचित्राकारत्वादस्य न कदाचिदपि स्यात् । यत् आदौ मध्ये च विचित्रत्वात् साम्यं न सहते तत्कथमन्तेऽपि तथा भवेदिति भावः ॥ ८५ ॥

तदाह

**आदौ मध्ये च चित्रत्वात्कर्मणां न यथा समः ।**
**आत्माकारोऽपि कोऽप्येष भाविकाले तथा भवेत् ।। ८६ ।।**

एकः अपिशब्दो भिन्नक्रमः, तेन भाविकालेऽपीति । एष इति कोऽपि आत्माकारः भवेदिति न समः । इदमत्र आकूतं,—भवतां हि मले सति कर्म यस्यापि साम्ये तत्परिपाकोऽपवर्गनिमित्तमिति मतम् । यत्र च मल एव नास्ति तत्र कः कर्मार्थो यदपेक्षयापि एवं स्यादिति ।। ८६ ।।

एवमुच्छिन्न एव भवदभिमतो बन्धमोक्षविभागः, कृतं च शास्त्राडम्बरेण,—इत्याह

**इत्थमुच्छिन्न एवायं बन्धमोक्षादिकः क्रमः ।**
**अज्ञानाद्बन्धनं मोक्षो ज्ञानादिति परीक्षितम् ।। ८७ ।।**

ननु आस्तामेतत्, अभ्युपगम्यापि मलं कर्मसाम्यं न संगच्छते,—इत्याह

**विरोधे स्वफले चैते कर्मणी समये क्वचित् ।**
**उदासाते यदि ततः कर्मैतत्प्रतिबुध्यताम् ।। ८८ ।।**
**शिवशक्तिनिपातस्य कोऽवकाशस्तु तावता ।**

यदि नाम कस्मिंश्चित्काले विरुद्धे कर्मणी भोगदानं प्रति रुद्धे तिष्ठतस्तदौचित्यादन्तरा कर्मान्तरमेव किंचित्प्रतिबुध्यतां, तत्प्रतिक्षेपेण स्वमेव फलं दातुं समुज्जृम्भताम् । तावता कर्मप्रतिरोधमात्रेणैव पुनरकाण्डकूष्माण्डन्यायेन शिवशक्तिनिपातस्य कोऽवसरः ।। ८८ ।।

एवं हि प्रलयदशायां युगपदेव अणूनां तन्निपातः प्रसजेत् तदानीं सर्वकर्मणां भोगदाने प्रतिरुद्धशक्तित्वात्, न च कर्मसाम्येऽभ्युपगम्यमाने शिवशक्तिनिपातेन कश्चिदर्थं इत्याह

**क्वापि काले तयोरेतदौदासीन्यं यदा ततः ।। ८९ ।।**
**कालान्तरे तयोस्तद्वद्विरोधस्यानिवृत्तितः ।**
**अतश्च न फलेतान्ते ताभ्यां कर्मान्तराणि च ।। ९० ।।**

**रुद्धानि प्राप्तकालत्वाद्गताभ्यामुपभोग्यताम् ।**
**एवं सदैव वार्तायां देहपाते तथैव च ।। ९१ ।।**
**जाते विमोक्ष इत्यास्तां शक्तिपातादिकल्पना ।**

यदि नाम हि कस्मिंश्चित्काले विरुद्धे कर्मणी रुद्धे तिष्ठतस्तदुत्तरकालमपि विरोधस्य अनिवृत्तत्वात् तथैव आसाते, कर्मान्तराणि च प्राप्तकालानि उपभोग्यतागमनेन प्राप्तकालत्वात् रुन्धाते,—इति कदाचिदपि किमपि कर्म न फलेत् । एवं च सदातन्यां वार्तायां क्रमादायुष्प्रदस्य कर्मणोऽप्यन्तराक्षैण्यात् देहपातोऽवश्यं भवेत्,—इति अयत्नत्न एव मोक्षः सिद्ध्येत् । तत्

'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।'

इति भङ्ग्या व्यर्थं शक्तिपातपरिकल्पनमिति ॥ ९१ ॥

अथोच्यते रुद्धे सती कर्मणी सदैव कर्मान्तरमपि रुन्धाते, किंतु उत्तरकालं कदाचिदपि तत्फलेत् इति । तत्प्रथम एव क्षणे तत्फलतु नियतनिमित्तावचनात् किं कर्मान्तरप्रतीक्षणेन,—इत्याह

**अथोदासीनतत्कर्मद्वययोगक्षणान्तरे ।। ९२ ।।**
**कर्मान्तरं फलं सूते तत्क्षणेऽपि तथा न किम् ।**

अथ न तत्र कर्मान्तरं किंचित्फलेत्, अपितु ते एव प्रतिबन्धवर्जिते रुद्धे कर्मणी फलत इतीष्यते, तत्तयोः प्रतिबन्धवर्जनमेव किं—कृतमित्याह

**क्षणान्तरेऽथ ते एव प्रतिबन्धविवर्जिते ।। ९३ ।।**
**फलतः प्रतिबन्धस्य वर्जनं किंकृतं तयोः ।**

तदपि तयोः किं स्वतः परतो वा । स्वतश्चेत् आदावेव अस्तु, परतश्चेत्कुत इत्यनवधारणादास्तामेतत् ॥ ९३ ॥

ननु कर्मसाम्यमपेक्ष्य परमेश्वरः शक्तिपातं कुर्यादित्युक्तम्, न च तदुभयमपि स्वयमविचित्रत्वात् तीव्रमध्यमन्दादिभेदभिन्ने शक्तिपातवैचित्र्ये निमित्तं भवितुमर्हति,—इत्याह

**कर्मसाम्यं स्वरूपेण न च तत्तारतम्यभाक् ।। ९४ ।।**
**न शिवेच्छेति तत्कार्ये शक्तिपाते न तद्भवेत् ।**

न च तारतम्यभागिति, साम्यात्मकत्वात् नित्यत्वाच्च। तदिति तारतम्यम्। कारणगुणप्रक्रमेण हि कार्येण भाव्यमिति भावः॥ ९४॥

एवमनुग्रहवन्निग्रहोऽपि भवन्मते न घटते इत्याह

**तिरोभावश्च नामायं स कस्मादुद्भवेत्पुनः॥ ९५॥**
**कर्मसाम्येन यत्कृत्यं प्रागेवैतत्कृतं किल।**

इयदेव हि कर्मसाम्यस्य कृत्यं यत्तदपेक्ष्य अणूनामीश्वरः शक्तिपातं कुर्यादिति। तच्च अनेन प्रागेव कृतमिति पुनस्तदनन्तरमपि तिरोभावो नाम कस्मादुद्भवेत्, तदुद्भवे न किंचिन्निमित्तं उत्पश्याम इत्यर्थः। न तावन्मलं तस्य परिपक्वत्वात्। नहि तत्कृतकार्यत्वात् परिपक्वं सत् पुनरपि पुंबन्धकतया परिणमेत्। एवं हि यत्नसंस्थापितापि शास्त्रव्यवस्था विसंस्थुलतां यायात्। नापि कर्ममलसहकृतस्यैवास्य भोगदानं प्रति सामर्थ्यम्, नापि तत्साम्यं तस्य शक्तिपातमात्रहेतुतया चरितार्थत्वात्॥ ९५॥

ननु किमेभिरेश्वरेच्छैवास्य हेतुरुच्यतामित्याह

**हेतुत्वे चेश्वरेच्छाया वाच्यं पूर्ववदेव तु॥ ९६॥**

तत्र हि न तावदियं निरपेक्षा तद्धेतुरित्युक्तं प्राग्बहुशः। नापि सापेक्षा मलकर्मभ्यामन्यस्य अपेक्षणीयस्य अभावात् तिरोभावे च कार्ये तदयोगात्। तत्पराहतं भेदवादिनामीश्वरः पञ्चकृत्यकारीति॥ ९६॥

अनयैव भङ्ग्या च किमीश्वरेच्छा नित्यहेतुरेवं कुर्यात् उत अनित्यहेतुः,—इत्यादिकल्पनान्तराण्यपि परिकल्पितानि निरस्तानि,—इत्याह

**एतेनान्येऽपि येऽपेक्ष्या ईशेच्छायां प्रकल्पिताः।**
**ध्वस्तास्तेऽपि हि नित्यान्यहेत्वहेत्वादिदूषणात्॥ ९७॥**

अत्र अहेतुत्वे नित्यं सत्त्वमसत्त्वं वेति दोषः। नित्यहेतुत्वे नित्यं सत्त्वमेव। अनित्यहेतुत्वे च को नामायमनित्योऽन्यो हेतुरिति तदनवधारणान्न किंचित्सिद्ध्येदिति॥ ९७॥

अथोच्यते वैराग्याद्यपेक्ष्य परमेश्वरः शक्तिपातं विदध्यादिति, तदपि नेत्याह

**वैराग्यं भोगवैरस्यं धर्मः कोऽपि विवेकिता।**
**सत्सङ्गः परमेशानपूजाद्यभ्यासनित्यता॥ ९८॥**

**आपत्प्राप्तिस्तन्निरीक्षा देहे किंचिच्च लक्षणम् ।**
**शास्त्रसेवा भोगसंघपूर्णता ज्ञानमैश्वरम् ।। ९९ ।।**
**इत्यपेक्ष्यं यदीशस्य दूष्यमेतच्च पूर्ववत् ।**

एतच्च पूर्ववद्दूष्यमिति, यदपेक्षणीयस्य वैराग्यादेरहेतुत्वे नित्यं सत्त्वमसत्त्वं वेति दोषः । सहेतुत्वे च किं नित्यो हेतुः कादाचित्को वा । तत्राद्ये नित्यं सत्त्वमेव, इतरत्र च कोऽन्यः कादाचित्को हेतुः । न तावदीश्वरेच्छा, तथात्वे ह्यन्योन्याश्रयः । नापि मलपरिपाकः कर्मसाम्यं वा । एवं हि शक्तिपाते कार्ये तदेव ईश्वरोक्तवदपेक्षणीयमस्तु, किमेभिरपि अन्तरापरिकल्पितैः । न च इतरदपि कारणं किंचिद्वक्तुं शक्यं तस्यापि नियमायोगात् ।। ९९ ।।

ननु इह वैराग्यादयस्तावच्छक्तिपातवदव्यभिचरितसहभावाः सर्वत्र दृश्यन्त इत्येतावता इदं संभाव्यते यन्नूनं वैराग्याद्यपेक्ष्य परमेश्वरः शक्तिपातं विदध्यादिति, अन्यथा हि कथमेषामेतत्सहभावो भवेत्, तत्र पुरःस्थितानां वैराग्यादीनां

'कार्यं चेदुपलभ्येत किं कारणपरीक्षया ।'

इति न्यायेन किमेवं कारणान्वेषणेन,—इत्याह

**व्यभिचारश्च सामस्त्यव्यस्तत्वाभ्यां स्वरूपतः ।।१००।।**
**अन्योन्यानुप्रवेशश्चानुपपत्तिश्च भूयसी ।**

इह शक्तिपाते कार्ये किमीश्वरेण वैराग्यादयः समस्ता अपेक्ष्याः उत व्यस्ताः, उभयथापि व्यभिचारः । तत्र न तावत्समस्ताः शक्तिपातवतां तथारूपत्वादृष्टेः । नापि व्यस्ताः बौद्धादीनां वैराग्येऽपि शक्तिपाताभावात् । वैराग्यादयश्च परस्परान्तर्भावादियन्तोऽपि न संभवन्ति,—इत्याह 'स्वरूपतोऽन्योन्याश्रयानुप्रवेशश्च' इति । यतः

'वैराग्यं नाम भोगेभ्यो वैमुख्यमुच्यते' इति ।

ततः पृथग्भोगवैरस्यं न वाच्यं तत्रैवास्य अन्तर्भावात् । भूयसी च इयमनुपपत्तिर्यदियदपेक्षते परमेश्वर इति । किंचिन्मात्रमपेक्षमाणस्यापि हि स्वातन्त्र्यं खण्डयेत, किं पुनरियद्वस्तुजातं यत्रैकतराभावोऽपि न किंचित सिद्ध्येदिति । तद्धिगिदमैश्वर्यं यत्स्वेच्छयैव न किंचिदपि कर्तुं पार्यत इति । यदाहुः

'राज्यमिव मन्त्रिपरवशमैश्वर्यं क्वोपयुज्यते तादृक् ।
यत्रापरनिरपेक्षं रुच्यैव न रच्यते किंचित् ॥'

इति ॥ १०० ॥

तद्भेदवादिनां कस्तावच्छक्तिपातविधौ क्रम इति न जानीम इत्याह

**तस्मान्न मन्महे कोऽयं शक्तिपातविधेः क्रमः ॥१०१॥**

एवं शक्तिपातविधौ परकीयमतमनुवादपुरःसरं निराकृत्य, स्वमतं दर्शयितुमाह

**इत्थं भ्रान्तिविषावेशमूर्च्छानिर्मोकदायिनीम् ।**
**श्रीशंभुवदनोद्गीर्णां वच्म्यागममहौषधीम् ॥१०२॥**

तदेव प्रकटयति

**देवः स्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः ।**
**रूपप्रच्छादनक्रीडायोगादणुरनेककः ॥१०३॥**

इह एक एव परमेश्वरश्चिद्रूपः सन् प्रकाशात्मा, न तु सूर्यादिप्रकाशान्तरवत् जडः । अत एव स्वतन्त्रोऽत एव निखिलजगल्लयोदयक्रीडाकारित्वात् देवः स्वभावत एव न तु किंचिदपि अपेक्ष्य । परिपूर्णदृक्क्रियास्वभावस्य एकस्यैव आत्मनो गोपनेन संकुचितदृक्क्रियात्माणुरनेककः परिगृहीतकृत्रिमानेकरूपः संवृत्तो येनायमियतः संसारस्य समुल्लासः ॥ १०३ ॥

ननु एतावता कः संसारार्थ इत्याशङ्क्याह

**स स्वयं कल्पिताकारविकल्पात्मककर्मभिः ।**
**बध्नात्यात्मानमेवेह स्वातन्त्र्यादिति वर्णितम् ॥१०४॥**

इह हि स एव स्वेच्छावशात्परिकल्पिततत्तदाकारैरिदं कार्यम् इदमकार्यम् इत्येवंविधविविधविकल्पमात्रपरमार्थैः कर्मभिः

'तत्रापि कार्ममेवैकं मुख्यं संसारकारणम् ।' ( ई. प्र. ३ अ. १० श्लो० )

इत्युक्त्या मुख्यया वृत्त्या कार्मेण मलेन स्वस्वातन्त्र्यादात्मानं बध्नाति तत्तज्जात्यायुर्भोगवैचित्र्येण संसरति,—इति नवमाह्निकादावुक्तप्रायम्,—इति किं पुनस्तत्प्रपंचनेनेत्यर्थः ॥ १०४ ॥

न केवलं स्वातन्त्र्यादात्मानं बध्नात्येव यावन्मोचयत्यपीत्याह

**स्वातन्त्र्यमहिमैवायं देवस्य यदसौ पुनः ।**
**स्वं रूपं परिशुद्धं सत्स्पृशत्यप्यणुतामयः ।।१०५।।**

इदमपि हि नाम अस्य स्वातन्त्र्यविजृम्भितमेव यदणुरूपोऽपि सन्नसौ प्रत्यावृत्त्या स्वयं परिशुद्धं रूपं स्पृशति, गोपितमपि पूर्णदृक्क्रियास्वभावमात्मानं प्रकटयति इत्यर्थः ॥ १०५ ॥

ननु यद्येवं तत्कस्मात्कस्मिंश्चिदेव पुंस्यसावेवमात्मानमभिव्यनक्ति, किमन्यत्र अस्य प्रद्वेष इत्याशङ्कां निरवकाशयति

**न वाच्यं तु कथं नाम कस्मिंश्चित्पुंस्यसौ तथा ।**
**नहि नाम पुमान्कश्चिद्यस्मिन्पर्यनुयुज्यते ।।१०६।।**

नहि अस्मद्दर्शने भेदवादिवत् तदतिरिक्तः कश्चित् पुमान् नाम संभवेत् यत्रायं पर्यनुयोगः स्यात् सर्वानिव मोचयतु मा वा कंचिदिति । यावता हि देव एवासौ स्वातन्त्र्यात् शुद्धाशुद्धात्मतया प्रथते यदस्य तादृशमेव स्वं रूपमिति ॥ १०६ ॥

ननु भवतु नामैवं, तथापि भेददशाधिशायित्वेऽस्य किं नायं पर्यनुयोग इति । ननु एवं चेन्मन्यसे कः पर्यनुयोगार्थ इत्याह

**देव एव तथासौ चेत् स्वरूपं चास्य तादृशम् ।**
**तादृक्प्रथास्वभावस्य स्वभावे कानुयोज्यता ।।१०७।।**

कानुयोज्यतेति न काचिदित्यर्थः । अपर्यनुयोज्यो हि भावस्वभाव इति भावः ॥ १०७ ॥

न चैतदस्माभिरेवोक्तमित्याह

**आहास्मत्परमेष्ठी च शिवदृष्टौ गुरूत्तमः ।**

एतदेवाह

**पञ्चप्रकारकृत्योक्तिशिवत्वान्निजकर्मणे ।।१०८।।**
**प्रवृत्तस्य निमित्तानामपरेषां क्व मार्गणम् ।**

सृष्ट्यादिपञ्चप्रकारं कृत्यं यस्य तस्योक्तिः पंचविधकृत्योऽयमिति एवंस्वभावं यच्छिवत्वं तस्मात्, अनुग्रहाद्यात्मने निजकर्मणे प्रवृत्तस्य अस्य

देवस्य अपरेषां रागद्वेषादीनां निमित्तानां क मार्गणं निमित्तान्वेषणप्रसंगस्येव अभावात्, कथमेवमात्मस्वरूपाभिव्यक्तिलक्षणमनुग्रहं विदध्यादिति न पर्यनुयोज्यम् ॥

ननु कर्मणि तत्फलोपभोगे वा कर्तव्ये निमित्तमन्तरेण पुंसः प्रवृत्तिरेव न भवेत्, तत्किमेतदुक्तमपरेषां निमित्तानां क मार्गणमिति इत्याशङ्क्याह

**छन्नस्वरूपताभासे पुंसि यद्यादृशं फलम् ॥१०९॥**

**तत्राणोः सत एवास्ति स्वातन्त्र्यं कर्मतो हि तत ।**

परिगृहीतसंकोचे हि पुंसि तीव्रमन्दादिरूपं यत्सुखाद्यात्म फलं, तत्र भोक्तव्ये यत्तस्य भुजिक्रियाविषयं स्वातन्त्र्यं कर्तृत्वं तदणोः सत एव। यतस्तत्कर्मजं नतु सहजमिति तत्र स्त्रयादि निमित्तान्तरमवश्यमृग्यमन्यथा हि कथं तदनुभव एव भवेत् ॥

ननु एवं स्वरूपगोपनात्मनि अणुत्वे सति कार्मः, ततस्तन्निमित्तकः संसार इति तयोः सर्ववादिप्रतिपन्नमनादित्वं व्याहन्येत इत्याशङ्क्याह

**ईश्वरस्य च या स्वात्मतिरोधित्सा निमित्तताम् ॥११०॥**

**साभ्येति कर्ममलयोरतोऽनादिव्यवस्थितिः ।**

इह ईश्वरस्य स्वरूपतिरोधित्सैव तावदाणवस्य मलस्य कारणं यत्स्वरूपाख्यातिरेव तत् आख्यातिनान्तरीयकमेव च कर्म यत्पूर्णे रूपे तद्योगो नास्ति इति मलवत्तस्यापि सैव कारणमिति मलकर्मणोरनादित्वे समानः पन्थाः, किंतु उत्पन्नं सत् कर्ममलमपि अपेक्षते । यदुक्तं

'निमित्तमभिलाषाख्यं नैमित्तिकमतः परम् ।'

इति ॥

ननु एवमख्यातिराणवं मलमस्तु, अभिलाषरूपता पुनरस्य कुतस्त्या, यदभिलाषक्रियायां कर्ता तावन्नास्ति तस्य गोपितस्वरूपत्वात् । नापि तत् कर्म अभिलषणीयस्य इदानीन्तनक्षणं यावदनुल्लसितत्वात् । तत्कथं 'निमित्तमभिलाषाख्यम्' इत्यादिरागमः प्रमाणतां यायादित्याशङ्क्याह

**तिरोधिः पूर्णरूपस्यापूर्णत्वं तच्च पूरणम् ॥१११॥**

**प्रति भिन्नेन भावेन स्पृहातो लोलिका मलः ।**

इह खलु पूर्णस्य रूपस्य तिरोभावो नाम अपूर्णत्वमुच्यते । तच्च भिन्नेन भावेन पूरणं प्रति स्पृहा योग्यतया तदौन्मुख्यमात्रमतो लोलिका इति अभिलाष इति च मलः सर्वशास्त्रेषु उद्घोष्यते इति युक्तमुक्तम्

'............अभिलाषो मलोऽत्र तु ।' ( स्व० ४।१०५ )

इति ॥

ननु भेदवादिवन्मलादीनामीश्वरस्य च

'यथानादिप्रवृत्तोऽयं घोरः संसारसागरः ।
शिवोऽपि हि तथानादिः संसारान्मोचकः स्मृतः ॥'

इत्यादिनीत्या तुल्यकक्ष्यतयैव अनादित्वमुच्यतां, किमेवं प्रक्रियागौरवकारिणा हेतुहेतुमद्भावपरिकल्पनेनेत्याशंक्याह

**विशुद्धस्वप्रकाशात्मशिवरूपतया विना ॥११२॥**
**न किंचिद्युज्यते तेन हेतुरत्र महेश्वरः ।**

इह मलादीनां सत्तान्यथानुपपत्त्या विशुद्धस्वप्रकाशात्ममहेश्वरसंविद्विश्रान्तिरेव तत्त्वमित्यत्र महेश्वर एव हेतुः, यत्प्राक्

'यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ।' ( ८।३ )

इत्युक्तम् ॥

ननु यद्येवं, तत्किमेभिरन्तर्गडुप्रायैर्मलादिभिरीश्वरेच्छैव विश्वसर्गादौ निरपेक्षा निमित्तमस्तु इत्याशङ्क्याह

**इत्थं सृष्टिस्थितिध्वंसत्रये मायामपेक्षते ॥११३॥**
**कृत्यै मलं तथा कर्म शिवेच्छैवेति सुस्थितम् ।**

इह खलु उक्तयुक्त्या विश्वत्र सृष्टिस्थितिसंहारलक्षणं निजं कृत्यत्रयं कर्तुमीश्वरेच्छैव प्रगल्भते, किंतु मलं कर्म मायां चापेक्ष्य । यत्परमेश्वरः

'शुद्धेऽध्वनि शिवः कर्ता प्रोक्तोऽनन्तोऽसिते प्रभुः ।'

इत्युक्त्या मायीयेऽध्वनि अनन्तमुखेन सृष्ट्यादि विदध्यात् । न च तस्य ईश्वरवदनन्यापेक्षमेव स्वातन्त्र्यं समस्ति इति अवश्यमस्य मलाद्यपेक्षणीयम् । अन्यथा हि कथं प्रतिपुं विचित्रं सृष्ट्यादि स्यादिति सर्वं सुस्थम् ॥

ननु परमेश्वरः सृष्ट्यादौ कृत्यत्रये मलाद्येवमपेक्षते इत्युक्तम्, अवशिष्टे पुनरनुग्रहादौ कृत्यद्वये किं तदपेक्षते नवा इत्याशङ्क्याह

**यत्तु कस्मिंश्चन शिवः स्वेन रूपेण भासते ।।११४।।**

ननु इदमर्धजरतीयं, यदीश्वरः किंचित्कृत्यं सापेक्षं कुर्यात् किंचिच्च निरपेक्षमित्याशंक्याह

**तत्रास्य नाणुगे तावदपेक्ष्ये मलकर्मणी ।**
**अणुस्वरूपताहानौ तद्गतं हेतुतां कथम् ।।११५।।**
**व्रजेन्मायानपेक्षत्वमत एवोपपादयेत् ।**

यन्नाम हि मलाद्यणुतायां निमित्तं तत्कथं तदपगमे हेतुतां यायात्, नहि घटस्य घटतायां निमित्तं ।मृच्चक्रसूत्रादि तन्नाशे :कर्परादिजनने वा कश्चिदपेक्षते,—इति युक्तमुक्तमस्यानुग्रहे कार्ये तद्विरुद्धे मलकर्मणी नापेक्ष्ये इति। एवमत्र मायानपेक्षत्वमपि उपपादनीयम् । यत्र हि मलाद्यपि नापेक्षणीयं, तत्र का वार्ता तदपेक्षाया इत्युक्तं मायानपेक्षत्वमत एवोपपादयेदिति ।।

तस्मादनुग्रहे कर्तव्ये परमेश्वरस्यैव अनन्यापेक्षं युक्तं कर्तृत्वमित्याह

**तेन शुद्धः स्वप्रकाशः शिव एवात्र कारणम् ।।११६।।**

ननु यद्येवमनन्यापेक्ष एव अनुग्रहं परमेश्वरः कुर्यात्, तत्तस्य तरतमभावः कुतस्त्य इत्याशंक्याह

**स च स्वाच्छन्द्यमात्रेण तारतम्यप्रकाशकः ।**

ननु स्वाच्छन्द्यमात्रेण इत्यसिद्धं, यल्लोकधर्मिण इव कस्यचित्कर्माद्यपेक्ष्यापि पारमेश्वर्यनुग्रहशक्तिर्निपतेदित्याशंक्याह

**कुलजातिवपुष्कर्मवयोनुष्ठानसंपदः ।।११७।।**
**अनपेक्ष्य शिवे भक्तिः शक्तिपातोऽफलार्थिनाम् ।**
**या फलार्थितया भक्तिः सा कर्माद्यमपेक्षते ।।११८।।**
**ततोऽत्र स्यात्फले भेदो नापवर्गे त्वसौ तथा ।**

शिव भक्तिरेव शक्तिपात इति लिङ्गलिङ्गिनोरभेदोपचारात् । भक्तिर्हि नाम अस्य प्राथमिकं चिह्नम् । यदुक्तम्

'तत्रैतत्प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला ।'(मा० वि० १४।८)

इति । अफलार्थिनामिति मुमुक्षूणाम् । आद्यमिति प्राक्तनम् । अपेक्ष्यमाणं च कर्म विचित्रं, तत् तत्फलेऽपि वैचित्र्यमित्युक्तं ततोऽत्र स्यात्फले भेद इति । कर्मानपेक्षत्वादपवर्गे पुनरयं भेदो नास्ति इत्याह नापवर्गे त्वसौ तथेति ॥

ननु यस्य एकैव अविभक्ता भुक्तिमुक्तिविषया भक्तिस्तस्य कथमसौ एकत्र कर्मापेक्ष्यतेऽपरत्र न इति संगच्छतां नाम इत्याशंक्याह

**भोगापवर्गद्वितयाभिसंदातुरपि स्फुटम् ॥११९॥**
**प्राग्भागेऽपेक्षते कर्म चित्रत्वान्नोत्तरे पुनः ।**

चित्रत्वादिति । यदुक्तम् ।

'कार्ये विशेषमाधित्सुर्विशिष्टं कारणं स्पृशेत् ।
सन्ति भोगे विशेषाश्च विचित्राः कर्मसंगताः ॥'

इति । उत्तर इति अपवर्गे । यदुक्तम्

'मुमुक्षोर्न विशेषाय नैःश्रेयसपथं प्रति ।
नहि ब्रह्मणि शंसन्ति................ ॥'

इति । एवमाद्यः परः शक्तिपातो, द्वितीयस्त्वपर इति सिद्धम् । यद्वक्ष्यति

'इदं सारमिह ज्ञेयं परिपूर्णचिदात्मनः ।
प्रकाशः परमः शक्तिपातोऽवच्छेदवर्जितः ॥
तथाविधोऽपि भोगांशावच्छेदेनोपलक्षितः ।
अपरः शक्तिपातोऽसौ पर्यन्ते शिवताप्रदः ॥' (१३।२५२)

इति ॥

ननु एवमीश्वरस्तिरोभावेऽपि किं सृष्ट्यादिवन्मलाद्यपेक्षते किमुत अनुग्रहवन्न इत्याशंक्य, गर्भीकृतमलादिनैरपेक्ष्यं तत्स्वरूपमेव तावभिधत्ते

**अनाभासितरूपोऽपि तदाभासितयेव यत् ॥१२०॥**
**स्थित्वा मन्त्रादि संगृह्य त्यजेत्सोऽस्य तिरोभवः ।**

कश्चिद्धि वस्तुतोऽनुग्रहशक्तिपाताभावात् अनाभासितरूपोऽपि परमेश्वरेच्छयैव परविप्रलम्भाय दाम्भिकतया भक्तिश्रद्धादिदर्शनेन आभासितरूपतयेव

स्थित्वा शैवशास्त्रोक्तं मन्त्रादि सम्यग्दीक्षादिपूर्वं गृहीत्वा पश्चादादराभावात् यत्त्यजेत् सोऽस्य तिरोभवः। तिरोहितस्यापि स्वस्वरूपस्य गण्डोपरिपिटकोद्भेदन्यायेनाभिधानं येनास्य कदाचिदपि संसारान्निः सरणं न स्यात्। यदुक्तमनेनैवान्यत्र

'कश्चित्त्वीशेच्छया सम्यगनाश्वस्तेन चेतसा।
निन्दन्नेव भजेच्चर्यां स तिरोहित उच्यते॥
निन्द्यमानमहामन्त्रविद्याचर्यादिकोपजम्।
पाप्म तं पातयेद्घोरे यातनाधाम्नि सर्वथा॥' (तं० व० धा० ३।७३)

इति॥

इदानीम् 'आगममहौषधीं वच्मि' इत्युपक्रान्तं निर्वाहयितुमाह

**श्रीसारशास्त्रे भगवान्वस्त्वेतत्समभासत॥१२१॥**

एतद्वस्तु इति अस्मदभिमतशक्तिपातविधिलक्षणम्॥ १२१॥

तदेवाह

**धर्माधर्मात्मकैर्भावैरनेकैर्वेष्टयेत्स्वयम्।**
**असन्देहं स्वमात्मानमवीच्यादिशिवान्तके॥१२२॥**
**तद्वच्छक्तिसमूहेन स एव तु विवेष्टयेत्।**
**स्वयं बध्नाति देवेशः स्वयं चैव विमुञ्चति॥१२३॥**
**स्वयं भोक्ता स्वयं ज्ञाता स्वयं चैवोपलक्षयेत्।**
**स्वयं भुक्तिश्च मुक्तिश्च स्वयं देवी स्वयं प्रभुः॥१२४॥**
**स्वयमेकाक्षरा चैव यथोष्मा कृष्णवर्त्मनः।**

अनेकैर्धर्माधर्मात्मकैर्भावैरिति मुख्यतया संसारकारणे विचित्रेण कार्मेण मलेन इत्यर्थः। तद्वदिति स्वयमेव स्वमात्मानं, शक्तिसमूहेन इति वामाज्येष्ठादिरूपेण, विवेष्टयेदिति अधिष्ठेत्। अत एवोक्तं स्वयमेव बध्नाति इति स्वयमेव विमुंचति इति। अत एवोक्तं भोक्तेति ज्ञातेति च यद्भोग एव बन्धो ज्ञातृत्वमेव च मोक्ष इति। न चास्य तावतिरिक्तावित्युक्तं स्वयं भुक्तिश्च मुक्तिश्चेति। अत एव सर्वमिदं विश्वं स्वात्ममयतयैव पश्येदित्याह स्वयमेव उपसमीपे लक्षयेदिति। देवीति शक्तिः। एकाक्षरेति पराभट्टा-

रिका। एतदेव व्यनक्ति यथोष्मा कृष्णवर्त्मन इति। यथोच्यते

'वह्नेरूष्मेव विज्ञेया………… ।' (ने० त० १।२६)

इति ॥

एतदेव तात्पर्यतो व्याचष्टे

**वस्तूक्तमत्र स्वातन्त्र्यात्स्वात्मरूपप्रकाशनम् ॥१२५॥**

अत्र स्वात्मन एव स्वातन्त्र्याद्बद्धतयेव मुक्ततयापि प्रकाशनं नाम वस्तूक्तम्। अयमेव तात्त्विकोऽर्थः प्रतिपादित इत्यर्थः ॥ १२५ ॥

न केवलमेतदत्रैवोक्तं यावदन्यत्रापीत्याह

**श्रीमन्निशाकुलेऽप्युक्तं मिथ्याभावितचेतसः।**
**मलमायाविचारेण क्लिश्यन्ते स्वल्पबुद्धयः ॥१२६॥**
**स्फटिकोपलगो रेणुः किं तस्य कुरुतां प्रिये।**
**व्योम्नीव नीलं हि मलं मलशंकां ततस्त्यजेत् ॥१२७॥**

क्लिश्यन्त इति वृथा क्लेशमनुभवन्ति इत्यर्थः। यथा स्फटिकोपलगतो रेणुर्व्योमगतो वा नीलिमा तयोर्न किंचिदपि वस्तुतो मलिनत्वादि कर्तुं शक्नुतामेवं शुद्धबुद्धस्वभावस्य आत्मनः स्वेच्छामात्रपरिकल्पिते मलकर्मणी इति तच्छंकां त्यजेत् वस्तुतः किंचिदेतन्नास्ति इत्यर्थः। यदुक्तं तत्र

'न मलो मलिनः कश्चिद्विद्यते वस्तुतः प्रिये।
स्वमनोमलिनत्वेन मलमात्मनि कथ्यते ॥
मलमायाविचारेण क्लिश्यन्ते स्वल्पबुद्धयः।
स्फटिकोपलगो रेणुः किं तस्य कुरुतां प्रिये ॥
अज्ञानमात्रं तु मलं ज्ञानं शुद्धं स्वभावतः।
शुद्धस्वभावबोधस्य न बन्धः स्यात्कदाचन ॥
आकाशे नीलिमा यद्वन्मलमेवं चिदात्मनः।

इति ॥ १२७ ॥

पूर्वाचार्यैरपि एतदेवोक्तमित्याह

**श्रीमान्विद्यागुरुश्चाह प्रमाणस्तुतिदर्शने।**

तदेवाह

**धर्माधर्मव्याप्तिविनाशान्तरकाले**
**शक्तेः पातो गाहनिकैर्यः प्रतिपन्नः ।**
**तं स्वेच्छातः संगिरमाणाः स्तवकाद्याः**
**स्वातन्त्र्यं तत्त्वव्यनपेक्षं कथयेयुः ॥१२८॥**

इह गाहनिकैर्गहनं मायामेव विश्वकारणत्वेन अभिदधद्भिर्भेदवादिभिर्धर्माधर्मयोः कर्मणोर्या व्याप्तिः कार्यजन्मने प्रसरणं तस्या विनाशः प्रतिबन्धस्तदात्मन्यन्तरे साम्यलक्षणे काले तदपेक्षो यः शक्तिपातः प्रतिपन्नस्तमेव स्तवकाद्याः स्तोत्रकारादयः स्वेच्छामात्रेणैव प्रतिजानानास्त्वद्विषयमनन्यापेक्षं तत्स्वातन्त्र्यमावेदयन्ति इत्यर्थः ॥ १२८ ॥

एवमियता मतादीनां तत्त्वं विवेचितम्, इदानीं पुनः शक्तिपातविचित्रतामभिधातुमाह

**तारतम्यप्रकाशो यस्तीव्रमध्यममन्दताः ॥१२९॥**
**ता एव शक्तिपातस्य प्रत्येकं त्रैधमास्थिताः ।**

यो नाम शक्तिपातस्य तारतम्यप्रकाश उक्तस्ता एव तीव्रमध्यमन्दताः प्रत्येकं त्रैधमास्थिताः । तीव्रतीव्रादिरूपतया अस्य नव प्रकारा इत्यर्थः ॥

एतदेव फलतो दर्शयति

**तीव्रतीव्रः शक्तिपातो देहपातवशात्स्वयम् ॥१३०॥**
**मोक्षप्रदस्तदैवान्यकाले वा तारतम्यतः ।**
**मध्यतीव्रात्पुनः सर्वमज्ञानं विनिवर्तते ॥१३१॥**
**स्वयमेव यतो वेत्ति बन्धमोक्षतयात्मताम् ।**
**तत्प्रातिभं महाज्ञानं शास्त्राचार्यानपेक्षि यत् ॥१३२॥**

स्वयमिति प्रसिद्धदेहपातनिमित्तमन्तरेणेत्यर्थः । अन्यकाल इति आसन्ने विप्रकृष्टे वा । अनेन च अस्य तरतमभावेन त्रैविध्यसूचनादपि प्रत्येकं तथात्वे सप्तविंशतिर्भेदा भवन्ति इति कटाक्षितम् । पुनः शब्दो व्यतिरेके । तेनात्र पूर्ववन्न देहस्य निवृत्तिः किंतु अज्ञानस्य । स्वयमेव इति नतु गुरुतः

शास्त्रतो वा यतोऽस्य स्वप्रतिभात एव एवं ज्ञानमुदियादत एव अस्य महत्त्वे शास्त्राचार्यानपेक्षित्वं हेतुः ॥ १३२ ॥

ननु आत्मानं प्रत्येव किं बन्धमोक्षतयात्मतामसौ वेत्ति उत परं प्रत्यपि इत्याशंक्याह

**प्रतिभाचन्द्रिकाशान्तध्वान्तश्चाचार्यचन्द्रमाः ।**
**तमस्तापौ हन्ति दृशं विस्फार्यानन्दनिर्भराम् ॥१३३॥**

तमस्तापाविति शैष्यौ ॥ १३३ ॥

ननु एवंविधप्रतिभाभाजनभूतोऽपि को नामासाविति निरूप्यम्। न तावच्छासिता व्युत्पत्त्यासादनसमये तत्त्वाभावात्। आसादितव्युत्पत्तिर्हि परान्व्युत्पादयन् कामं शासितेत्युच्येत। नापि शिष्यस्तस्य पराधेयव्युत्पत्तिकत्वात्। तत्कतरस्तावदयमिति न जानीम इत्याशंक्याह

**सशिष्टः कर्मकर्तृत्वाच्छिष्योऽन्यः कर्मभावतः ।**

शिष्यत इति स्वप्रतिभाधेयव्युत्पत्तिकत्वेन स्वप्रतिभां प्रति कर्मणोऽपि परं प्रति शास्यत्वाभावेन स्वातन्त्र्यविवक्षया कर्तृत्वात् 'लूयते केदारः' इतिवत् कर्मवद्भावात् कर्मणि क्ते शिष्ट इति। अन्य इत्येवप्रतिभाभाजः ॥

स चायं सर्वशास्त्रेषु स्वयं गुर्वाद्युपदेशनैरपेक्ष्येण भवनात् स्वयं स्वयंभूरित्याह

**शिष्टः सर्वत्र च स्मार्तपदकालकुलादिषु ॥१३४॥**
**उक्तः स्वयंभूः शास्त्रार्थप्रतिभापरिनिष्ठितः ।**

तदुक्तं प्राक्

> 'स तावत्कस्यचित्तर्कः स्वयमेव प्रवर्तते ।
> स च सांसिद्धिकः शास्त्रे प्रोक्तः स्वप्रत्ययात्मकः ।'　　(४।४०)

इति ॥

ननु स्वयमेव चेत्प्रतिभायाः समुल्लासस्तत्कस्यचिदेव इति कुतस्त्योऽयं नियमः। बाढं, न नियम इत्याह

**यन्मूलं शासनं तेन न रिक्तः कोऽपि जन्तुकः ॥१३५॥**

व्युत्पत्तेर्हि प्रतिभात्मकमेव वस्तु मूलम्। न च तेन प्रतिभात्मना वस्तुना तिर्यक्प्रायोऽपि कश्चिज्जन्तुः स्वोचितव्यापारनैपुणान्यथानुपपत्त्या रिक्तः। अत एव

'व्यवहाराः प्रतायन्ते तिरश्चामपि यद्वशात्।'

इत्युक्तम् ॥ १३५ ॥

ननु यद्येवं, तत्कस्मादविशिष्टैव सर्वेषां प्रतिभा नोल्लसेदित्याशंक्याह

**तत्रापि तारतम्योत्थमानन्त्यं दार्ढ्यकम्प्रते।**

एवं प्रतिभाया अविशेषेण संभवेऽपि तारतम्येन समुल्लासादनन्तप्रकारत्वं यतः सा दार्ढ्यकम्प्रते अपेक्षते, प्रथमतो दृढा कम्पमाना वा स्यादित्यर्थः॥

कम्पमाना च सा युक्त्याद्यपेक्षते यतोऽस्या दार्ढ्यमुदियादित्याह

**युक्तिः शास्त्रं गुरुर्वादोऽभ्यास इत्याद्यपेक्षते ॥१३६॥**

वादो वीतरागकथा ॥ १३६ ॥

ननु आमुखे कम्पमानमपि ज्ञानं स्वयमेव क्वचिद्यथायथं दार्ढ्यं गच्छत् दृष्टं, तत्किं युक्त्याद्यपेक्षणेन इत्याशंक्याह

**कम्पमानं हि विज्ञानं स्वयमेव पुनर्व्रजेत्।**
**कस्यापि दार्ढ्यमन्यस्य युक्त्याद्यैः केवलेतरैः ॥१३७॥**

युक्त्याद्यैरिति सुसंवादायापेक्ष्यमाणैः। केवलेतरैरिति व्यस्तसमस्तैः। यस्य पुनः स्वयमेव कम्पमानं विज्ञानं दार्ढ्यं गच्छेत् स निर्भितिरिति प्रागुक्तः। यस्य तु युक्त्याद्यैः स सभित्तिक इति ॥ १३७ ॥

ननु एवमत्र फले कश्चिद्विशेषोऽस्ति न वा इत्याशंक्याह

**यथा यथा परापेक्षातानवं प्रातिभे भवेत्।**
**तथा तथा गुरुरसौ श्रेष्ठो विज्ञानपारगः ॥१३८॥**

न केवलं प्रातिभस्यैव गुरोः परानपेक्षत्वे श्रेष्ठत्वं यावत्कल्पितस्यापि, शास्त्रीये क्वचिदंशे येन कल्पितोऽप्यसौ अकल्पित इत्युच्यते। तस्मात्प्रातिभत्वमेव सर्वात्मना ज्याय इत्याह

**अन्यतः शिक्षितानन्तज्ज्ञानोऽपि प्रतिभाबलात् ।**
**यद्वेत्ति तत्र तत्रास्य शिवता ज्यायसी च सा ।।१३९।।**

यदुक्तं प्राक्

'येन केनाप्युपायेन गुरुमाराध्य भक्तितः ।
तद्दीक्षाक्रमयोगेन शास्त्रार्थं वेत्त्यसौ ततः ॥
अभिषेकं समासाद्य यो भवेत्स तु कल्पितः ।
सन्नप्यशेषपाशौघविनिवर्तनकोविदः ॥
यो यथाक्रमयोगेन कस्मिंश्चिच्छास्त्रवस्तुनि ।
आकस्मिकं व्रजेद्बोधं कल्पिताकल्पितो हि सः ॥
तस्य योऽकल्पितो भागः स तु श्रेष्ठतमः स्मृतः ।' (४।७३)

इति ॥ १३९ ॥

एवमकल्पितत्वादेव प्रातिभस्य गुरोर्न बाह्यं किंचिदपेक्षणीयमित्याह

**न चास्य समयित्वादिक्रमो नाप्यभिषेचनम् ।**
**न सन्तानादि नो विद्याव्रतं प्रातिभवर्त्मनः ।।१४०।।**

**आदिविद्वान्महादेवस्तेनैषोऽधिष्ठितो यतः ।**
**संस्कारास्तदधिष्ठानसिद्ध्यै तत्तस्य तु स्वतः ।।१४१।।**

न हि नामास्य प्रातिभवर्त्मनो गुरोर्दीक्षाभिषेकादिः संस्कारः कश्चिदुपयुक्तो, यतोऽयमादिगुरुणा महादेवेन स्वयमेव अधिष्ठितः । तदधिष्ठानसिद्ध्यर्थं ह्येव संस्काराः प्रणीताः । तदेव पुनरस्य स्वतः सिद्धमिति किमेभिर्व्यर्थैः परिकल्पितैर्भवेत् ॥ १४१ ॥

ननु एवमपि वृत्तदीक्षोऽप्ययमिति न भवितुमर्हतीत्याशङ्क्याह

**देवीभिर्दीक्षितस्तेन सभक्तिः शिवशासने ।**

तेन स्वतस्तदधिष्ठानेन हेतुना शिवशासने शक्तिपातप्रथमचिह्नभूतया भक्त्या युक्तः सन् देवीभिः दीक्षितः ताभ्य एव अधिगताधिकार इत्यर्थः ॥

एवमकल्पितत्वेऽपि अस्य क्वचिदंशे कल्पितत्वमपि भवेदित्याशङ्क्याह

**दृढताकम्प्रताभेदैः सोऽपि स्वयमथ व्रतात् ।।१४२।।**

**तपोजपादेर्गुरुतः स्वसंस्कारं प्रकल्पयेत् ।**

सोऽपि प्रातिभो गुरुर्दृढताकम्प्रतामूलैस्तीव्रमध्यमन्दादिभेदैरुपलक्षितः सन् क्रमेण स्वयमात्मभावनातो व्रतादेर्गुरुतो वा स्वस्य आत्मनो दीक्षादि-लक्षणं संस्कारं प्रकल्पयेत् येनायमकल्पितकल्पकः प्रागुक्तः । तथाच

'यस्तु तद्रूपभागात्मभावनातः परं विना ।
शास्त्रवित्स गुरुः शास्त्रे प्रोक्तोऽकल्पितकल्पकः ॥
तस्यापि भेदा उत्कृष्टमध्यमन्दाद्युपायतः ।
भावनातोऽथवा ध्यानाज्जपात्स्वप्नाव्रताद्धुतेः ॥
प्राप्नोत्यकल्पितोदारमभिषेकं महामतिः ॥' (४।५३)

इति ॥ १४२ ॥

ननु किमत्र प्रमाणमित्याशङ्क्याह

**यतो वाजसिनेयाख्य उक्तं सिञ्चेत्स्वयं तनुम् ॥१४३॥**
**इत्याद्युपक्रमं यावदन्ते तत्परिनिष्ठितम् ।**
**अभिषिक्तो भवेदेवं न बाह्यकलशाम्बुभिः ॥१४४॥**

यदुक्तं तत्र

'व्रतादौ च जपादौ च तयोरन्ते तथैव च ।
यागं कृत्वाथ विधिवत्स्वेन स्वमभिषेचयेत् ॥
यदि संपत्त्यभावः स्यान्मनसैवं प्रकल्पयेत् ।
यस्मादिदं जगत्सर्वं मनस्यन्तः प्रतिष्ठितम् ॥

इत्यादि

'ततः पीयूषकलशं कलाकमलमण्डितम् ।
ध्यात्वा शिरसि तेनैव प्लावितं भावयेद्बुधः ॥
अभिषिक्तो भवेदेवं न बाह्यकलशाम्बुभिः ।
य एवमभिषिक्तः सन् सोऽधिकारी जपादिके ॥'

इत्यन्तम् ॥ १४४ ॥

एतच्च न केवलमत्रैवोक्तं यावदन्यत्रापीत्याह

**श्रीसर्ववीरश्रीब्रह्मयामलादौ च तत्तथा ।**
**निरूपितं महेशेन कियद्वा लिख्यतामिदम् ॥१४५॥**

**इत्थं प्रातिभविज्ञानं किं किं कस्य न साधयेत् ।**
**यत्प्रातिभाद्वा सर्वं चेत्यूचे शेषमहामुनिः ॥१४६॥**

अत्रैव यदित्यादिप्रमाणनिर्देशः । ऊचे इति पातञ्जलसूत्रेषु ॥ १४६ ॥

केचिच्चात्र विवदन्ते यन्नायं सर्वसंपत्तिहेतुरितीत्याह

**अन्ये त्वाहुरकामस्य प्रातिभो गुरुरीदृशः ।**
**सामग्रीजन्यता काम्ये तेनास्मिन्संस्कृतो गुरुः ॥१४७॥**
**नियतेर्महिमा नैव फले साध्ये निवर्तते ।**
**अभिषिक्तश्चीर्णविद्याव्रतस्तेन फलप्रदः ॥१४८॥**

अकामस्येति मुमुक्षोः । काम्ये हि सर्वाङ्गोपसंहारेण यथाशक्तिप्रयोगोपगमात्सामग्रीजन्येतेति तत्र गुरुतः प्राप्तदीक्षाभिषेकादिः स्वयं च चीर्णविद्याव्रतो गुरुः फलप्रदो न पुनस्तथाभूतोऽयं प्रातिभः । अयं हि नियतेर्महिमा यन्नियतादेव कारणान्नियतमेव फलं स्यादिति तन्नियतिदशाधिशायिनः साधकस्य कथमेवमन्यथाभावो भवेदिति भावः ॥ १४८ ॥

अस्मद्गुरवस्तु एतन्न मन्यन्त इत्याह

**असदेतदिति प्राहुर्गुरवस्तत्त्वदर्शिनः ।**
**श्रीसोमानन्दकल्याणभवभूतिपुरोगमाः ॥१४९॥**
**तथाहि त्रीशिकाशास्त्रविवृतौ तेऽभ्यधुर्बुधाः ।**

तदभिहितमेव पठति

**सांसिद्धिकं यद्विज्ञानं तच्चिन्तारत्नमुच्यते ॥१५०॥**
**तदभावे तदर्थं तदाहृतं ज्ञानमादृतम् ।**

यद्धि प्रातिभं नाम विज्ञानं, तत्सर्वशास्त्रेषु चिन्तामणिप्रायमुच्यते यदस्मात्काम्यादिसर्वफलसंपत्तिः स्यादिति । तस्य सांसिद्धिकस्य ज्ञानस्य अभावे पुनस्तद्ध्रुवदभिमतमाहृतं गुर्वाद्याधेयत्वात् कृत्रिमं ज्ञानमाणवादेः शाम्भव एव द्वारद्वारिभावेन विश्रान्त्युपगमात् तदर्थं सांसिद्धिकज्ञानाभिव्यक्तिनिमित्तमेव आदृतम् । येन तदेव विश्रान्तिधामतया सर्वत्र प्रधानतया उद्घोष्यते ॥ १५० ॥

यदागम इत्याह

**एवं यो वेद तत्त्वेन तस्य निर्वाणगामिनी ॥१५१॥**
**दीक्षा भवत्यसन्दिग्धा तिलाज्याहुतिवर्जिता ।**
**अदृष्टमण्डलोऽप्येवं यः कश्चिद्वेत्ति तत्त्वतः ॥१५२॥**
**स सिद्धिभाग्भवेन्नित्यं स योगी स च दीक्षितः ।**
**अविधिज्ञो विधानज्ञो जायते यजनं प्रति ॥१५३॥**
**इत्यादिभिस्त्रीशिकोक्तैर्वाक्यैर्माहेश्वरैः स्फुटम् ।**
**ज्ञानं दीक्षादिसंस्कारसतत्त्वमिति वर्णितम् ॥१५४॥**

इह यः कश्चित्सांसिद्धिकं ज्ञानं तत्त्वतो तत्त्वतो वेत्ति, तस्य बाह्यक्रियां विना निःसन्देहा निर्वाणगामिनी दीक्षा स्वत एव भवति । अत एवासौ दीक्षितः सन् नित्यं सिद्धिभाग्योगी चेति बाह्यक्रियामजानानो जानानो वा यजनं प्रति जायते काम्यादिविषयायां यजिक्रियायां कर्ता भवेत् । एवमाद्यैर्माहेश्वरैर्वाक्यैर्दीक्षादिसंस्कारसतत्त्वमेव सांसिद्धिकं ज्ञानमुक्तम् ॥ १५४ ॥

यत्पुनर्दीक्षादिनिमित्तकं ज्ञानं तज्ज्ञानहीनानामित्याह

**ज्ञानोपायस्तु दीक्षादिक्रिया ज्ञानवियोगिनाम् ।**
**इत्येतदधुनैवास्तां स्वप्रस्तावे भविष्यति ॥१५५॥**

अधुनास्तामेवेति शक्तिपातविचित्रानिरूपणावसरे तत्प्रसंगाभावात् । अत एवोक्तं स्वप्रस्तावे भविष्यति इति । स्वप्रस्ताव इति दीक्षाप्रकरणे ॥१५४ ॥

ननु एवं तात्त्विकस्य ज्ञानस्य प्रतिभावद्गुरुशास्त्रादिलक्षणमपि प्रमाणमभिव्यक्तिनिमित्तमस्ति इति किं प्रतिभायामेवैवं भर इत्याशङ्क्याह

**गुरुशास्त्रप्रमाणादेरप्युपायत्वमञ्जसा ।**
**प्रतिभा परमेवैषा सर्वकामदुघा यतः ॥१५६॥**

गुर्वादेः प्रमाणस्यापि परमेव यौक्तिकमुपायत्वं सैवास्य विश्रान्तिस्थानमित्यर्थः । यत इयमेव परतत्त्वैक्यापादनेन सर्वाभीष्टसंपत्तिहेतुरित्युक्तं सर्वकामदुघेति । आणवादेरुपायस्य हि द्वारद्वारिभावेन शाम्भवे प्रतिभात्मनि अविकल्प एव ज्ञाने विश्रान्तिरिति असकृदुक्तम् ॥ १५६ ॥

अत एवाह

**उपाययोगक्रमतो निरुपायमथाक्रमम् ।**
**यद्रूपं तत्परं तत्त्वं तत्र तत्र सुनिश्चितम् ।।१५७।।**

उपायानामाणवादीनां योगे परस्परस्य संबन्धे य आणवः शाक्ते, शाक्तः शांभव इत्यादिरूपः क्रमः तमवलम्ब्य निरुपायमत एव अक्रमं यत्प्रतिभात्मकं रूपमुदेति, तदेव परं तत्त्वं तत्र तत्र सर्वशास्त्रेषु सुनिश्चितम् । नात्र कस्यचिद्विमतिरित्यर्थः ।। १५७ ।।

ननु यद्येवं, तत्प्रातिभस्य गुरोरन्यतः स्वात्मनि संस्कारपरिकल्पनेन कोऽर्थ इत्याशङ्क्याह

**यस्तु प्रातिभबाह्यात्मसंस्कारद्वयसुन्दरः ।**
**उक्तोऽनन्योपकार्यत्वात्स साक्षाद्वरदो गुरुः ।।१५८।।**

यदुक्तं

'यस्त्वकल्पितरूपोऽपि संवाददृढताकृते ।
अन्यतो लब्धसंस्कारः स साक्षाद्भैरवायते ।।' (४।७७)

इति ।। १५८ ।।

एवं च प्रतिभापि शक्तिपातस्य बाह्यानामुपायानां वैचित्र्यात्तरतमभावेनोदियात्, येन मध्यतीव्रस्यापि शक्तिपातस्य तीव्रादिभेदभिन्नत्वं स्यादित्याह

**स्वमुक्तिमात्रे कस्यापि यावद्विश्वविमोचने ।**
**प्रतिभोदेति खद्योतरत्नतारेन्दुसूर्यवत् ।।१५९।।**

अत्र च दृष्टान्तसामर्थ्यादन्तरा यथोत्तरं कतिचिज्जनमोचनेऽपि इति लभ्यते ।। १५९ ।।

ननु इह प्रतिभायाः साक्षान्मध्यतीव्रः शक्तिपातः पारिपूर्ण्ये निमित्तमिति नास्ति विमतिः, तदित्तरद्वाह्यं पुनः कियदनुशीलनादपि प्रातिभत्वं भजेदित्याशङ्क्याह

**ततः प्रातिभसंवित्त्यै शास्त्रमस्मत्कृतं त्विदम् ।**
**योऽभ्यस्येत्स गुरुर्नैव वस्त्वर्था हि विडम्बकाः ।।१६०।।**

ततस्तरतमभावेन प्रतिभोदयाद्धेतोर्यः पुनरिदं श्रीतन्त्रालोकसंज्ञमस्मत्कृतं शास्त्रं प्रातिभत्वं संवेदयितुमभ्यस्येत्स समनन्तरमेव संपूर्णबोधत्वात् प्रातिभो गुरुर्भवेत् यद्दृक्पातमात्रात्सर्वोऽप्ययं लोकस्ताद्रूप्यमियात्। यदुक्तं प्राक्

'इति सप्ताधिकामेनां त्रिशतं यः सदा बुधः।
आह्निकानां समभ्यस्येत्स साक्षाद्भैरवो भवेत् ॥
सप्तत्रिंशत्सुसंपूर्णबोधो यद्भैरवो भवेत्।
किं चित्रमणवोऽप्यस्य दृशा भैरवतामियुः ॥' (१।२८६)

इति। ननु महतीयं विडम्बना यत्स्वयमेव स्वकृतिं प्रत्येवं प्रशंसा नाम इत्याशङ्क्योक्तं नैव वस्त्वर्था हि विडम्बका इति ॥ १६० ॥

ननु इदानीमेवोक्तं न कश्चिदपि जन्तुः प्रतिभया रिक्त इति, तत्किं तदुदये परकीयशास्त्राद्यपेक्षणेन इत्याशङ्क्याह

**परोपजीविताबुद्धया सर्वं इत्थं न भासते।**
**तदुक्त्या न विना वेत्ति शक्तिपातस्य मान्द्यतः ॥१६१॥**

यतः खलु परमेव उपजीवितुं प्रवृत्तः सर्वं एवोपजीवनान्यथानुपपत्त्या इत्थमुक्तेन प्रकारेण प्रतिभानवान् तथा न प्रकाशते, यतः शक्तिपातस्य मान्द्यात् परोक्तिमन्तरेण न किंचिद्वेत्ति, सर्वत्रैवास्य गुरुशास्त्रापेक्षेत्यर्थः ॥ १६१ ॥

न चैतत्स्वोपज्ञमेव अस्माभिरुक्तमित्याह

**स्फुटमेतच्च शास्त्रेषु तेषु तेषु निरूप्यते।**

तेषु तेषु इत्यनेन सर्वशास्त्राविगीतत्वमस्यार्थस्य उक्तम् ॥
एतदेव दर्शयति

**किरणायां तथोक्तं च गुरुतः शास्त्रतः स्वतः ॥१६२॥**
**ज्ञानयोग्यास्तथा केचिच्चर्यायोग्यास्तथापरे।**

तथाशब्देन च केचिद्योगयोग्याः क्रियायोग्याश्च इत्याक्षिप्तम्। अनेन चैषां नियतविषयत्वेनापि शास्त्राद्यपेक्षेति कटाक्षितम् ॥ १६२ ॥

ननु इदं सिद्धसाधनं यद्गुरुशास्त्रापेक्षं ज्ञानमुदियादिति। एतद्धि लोकत एव सिद्धं, किमत्र प्रमाणोपन्यासेन। स्वत एव केषांचिदेतदुदेति इत्यत्र पुनः

किं प्रमाणमित्याशङ्क्याह

**श्रीमन्नन्दिशिखातन्त्रे वितत्यैतन्निरूपितम् ॥१६३॥**

**प्रश्नोत्तरमुखेनेति तदभग्नं निरूप्यते ।**

अभग्नमिति अखण्डम् ॥ १६३ ॥

तदेवाह

**अनिर्देश्यः शिवस्तत्र कोऽभ्युपायो निरूप्यताम् ॥१६४॥**

**इति प्रश्ने कृते देव्या श्रीमाञ्छंभुर्न्यरूपयत् ।**

कोऽभ्युपाय इति अर्थात्साधकस्य, येनानिर्देश्येऽपि शिवे ज्ञानमुदियात् । तदुक्तं तत्र

'अनिर्देश्यः शिवो ह्येवं कथितः परमेश्वरः ।
उपायः कथ्यतां देव भक्तानुग्रहकाम्यया ॥'

इति ॥ १६४ ॥

किं न्यरूपयदित्याह

**उपायोऽत्र विवेकैकः स हि हेयं विहापयन् ॥१६५॥**

**ददात्यस्य च सुश्रोणि प्रातिभं ज्ञानमुत्तमम् ।**

विवेकैक इति विवेक एव एकः प्रधानं स्वपरामर्शात्मा विवेक इत्यर्थः । हेयमिति मायीयभावादि । अस्येति साधकस्य ॥ १६५ ॥

ततोऽपि किमित्याह

**यदा प्रतिभया युक्तस्तदा मुक्तश्च मोचयेत् ॥१६६॥**

**परशक्तिनिपातेन ध्वस्तमायामलः पुमान् ।**

तदुक्तं तत्र

'उपायो देवदेवेशि विवेकस्तत्र वै परः ।
हेयतां चैव संसारे ज्ञात्वा जन्तुर्विमोचयेत् ॥
अनित्येऽस्मिञ्छिवो ह्येकः शिवः सर्वगतः प्रभुः ।
मायीयान्युज्झ्य भावानि यदा भावेन भावयेत् ॥

ददात्यस्य च सुश्रोणि प्रातिभं ज्ञानमुत्तमम् ।
यदा प्रातिभसंयुक्तो मुच्यते मोचयेत्तदा ॥
परशक्तिनिपातेन ध्वस्तमायामलः पुमान् ।
परं याति पदं यत्र गत्वा भूयो न जायते ॥

इति ॥ १६६ ॥

ननु समनन्तरमेव

'दीक्षयोन्मोच्य देवेशि अध्वबन्धात्सुदारुणात् ।
सर्वज्ञादिगुणांश्चैव शिशोरापादयेद्गुरुः ॥'

इत्यादिना दीक्षया मोक्ष इत्युक्तम् । इदानीं तु प्रातिभान्मुच्यते इति किमेतदुक्तमित्याह

**ननु प्राग्दीक्षया मोक्षोऽधुना तु प्रातिभात्कथम् ॥१६७॥**

कथमिति उभयोर्मध्यात्कतरत्प्रमाणमित्यर्थः । तदुक्तं तत्र

'दीक्षया पूर्वमेवोक्तः पुद्गलस्य भवार्णवात् ।
मोक्षोऽधुना वदस्येवं प्रातिभस्येव तत्कथम् ॥
प्रमाणमत्र देवेश प्रातिभं वाथ दीक्षणम् ।
एतन्मे वद कामारे स्फुटार्थेन महेश्वर ॥

इति ॥ १६७ ॥

एतदप्युत्तरयति परमेश्वर इत्याह

**इति देव्या कृते प्रश्ने प्रावर्तत विभोर्वचः ।**
**दीक्षया मुच्यते जन्तुः प्रातिभेन तथा प्रिये ॥१६८॥**

इयान्पुनरनयोर्विशेष इत्याह

**गुर्वायत्ता तु सा दीक्षा बध्यबन्धनमोक्षणे ।**
**प्रातिभोऽस्य स्वभावस्तु केवलीभावसिद्धिदः ॥१६९॥**

बध्यबन्धनमोक्षणनिमित्तं परापेक्षेत्यर्थः ॥ १६९ ॥

ननु किं नामास्य केवलीभावसिद्ध्या स्यादित्याह

**केवलस्य ध्रुवं मुक्तिः परतत्त्वेन सा ननु ।**
**नृशक्तिशिवमुक्तं हि तत्त्वत्रयमिदं त्वया ॥१७०॥**

**ना बध्यो बन्धने शक्तिः करणं कर्तृतां स्पृशत् ।**
**शिवः कर्तेति तत्प्रोक्तं सर्वं गुर्वागमादणोः ॥१७१॥**
**पुनर्विवेकादुक्तं तदुत्तरोत्तरमुच्यताम् ।**
**कथं विवेकः किं वास्य देवदेव विविच्यते ॥१७२॥**

परतत्त्वेन केवलस्येति केवलपरतत्त्वात्मा मुक्त एव भवेदित्यर्थः। एवमपि देवी पुनः प्रश्नयति ननु इत्यादि। इह तावन्नरशक्तिशिवात्मकं विश्वमिति सर्वशास्त्रेषु उक्तम्। तत्र बन्धनक्रियायां ना नरो बध्यः, कर्मकर्त्रविशमयी शक्तिश्च कर्तृतां स्पृशात्करणं, शिवश्च कर्ता इत्येतत्सर्वमणोर्गुरुतश्च शास्त्रतश्चोपदेश्यतयोक्तम्। येनास्य बध्यबन्धबन्धयितृविभागावभासपुरःसरं महाज्ञानमुदियात्। भूयश्च तदेवोत्तरादागमादप्युत्तरमनुत्तरं विवेकादुक्तम्। तदस्य साधकस्य कथं विवेकस्तदुत्पादकः प्रकारः, किंवा विवेच्यमित्युच्यतां संशयविपर्ययादिव्युदसनेन निर्णीयतामित्यर्थः। तदुक्तं

'तत्त्वं त्रिविधमाख्यातं नरशक्तिशिवात्मकम् ।
शिवात्मकं सर्वगतं निष्प्रपञ्चमलेपकम् ॥
तद्धर्मधर्मिणी शक्तिस्त्वयाख्याता महेश्वर ।
बध्यबन्धनभावेन नरतत्त्वमुदाहृतम् ॥
कर्तृत्वे करणत्वे च शक्तितत्त्वं त्वयोदितम् ।
तच्च गुर्वागमात्साध्यमणुभिश्चोदितं स्फुटम् ॥
विवेकात्तत्कथं लभ्यं भूय एवोच्यते त्वया ।
प्रातिभस्य च ज्ञानस्य गुर्वाम्नायागतस्य च ॥
द्वैधं किमेतदुद्दिष्टं मोहनाय ममाधुना ।
उत्तरोत्तरमस्मात्तु स्फुटमाख्याहि शंकर ॥
येन निःसंशया सिद्धिर्मुक्तिरन्ते भवत्यणोः ॥
कथं विवेकः किं वास्य देवदेव विविच्यते ॥

इति। नृशक्तिशिवमिति गुर्वागमादिति च समाहारे द्वन्द्वः ॥ १७२ ॥

एतच्च निर्णेतुं परमेश्वरः प्रत्युवाच इत्याह

**इत्युक्ते परमेशान्या जगदादिगुरुः शिवः ।**

तदेवाह

**शिवादितत्त्वत्रितयं तदागमवशाद्गुरोः ॥१७३॥**

**अधरोत्तरगैर्वाक्यैः सिद्धं प्रातिभतां व्रजेत् ।**

यन्नाम हि नरशक्तिशिवात्मकं तत्त्वत्रयं तद्गुरोरागमाच्च प्रश्नप्रतिवचनरूपैर्वाक्यैः सिद्धं यथायथं तात्त्विकेन रूपेण प्ररोहमुपगतं, प्रातिभतां व्रजेत् प्रातिभं ज्ञानमस्य जायत इत्यर्थः ॥

ननु प्रातिभत्वं वस्तुसदिति असकृदुक्तं, तत्कथमिह शिवादितत्त्वत्रयमेव गुर्वादिमाहात्म्यात्प्रातिभतां व्रजेदित्युक्तमित्याशङ्क्याह

**दीक्षासिच्छिन्नपाशत्वाद्भावनाभावितस्य हि ॥१७४॥**
**विकासं तत्त्वमायाति प्रातिभं तदुदाहृतम् ।**

यन्नाम हि गुरुतो दीक्षासिच्छिन्नपाशस्य, आगमतश्च भावनाभावितस्य साधकस्य वस्तुसदेव प्रतिभातत्त्वं विकस्वरतां यायात्, तदेवोच्यते प्रातिभं ज्ञानमिति । तदुक्तं

'तदागमवशात्साध्यं गुरुवक्त्रान्महाधिपे ।
शिवशक्तिकरावेशाद्गुरुः शिष्यप्रबोधकः ॥
अधरोत्तरगैर्वाक्यैः प्रभुशक्त्युपबृंहितः ।
तच्छक्त्या सुप्रबुद्धस्य ध्वस्तमायामलस्य च ॥
दीक्षासिच्छिन्नपाशस्य भावनाभावितस्य च ।
विकासं तत्त्वमायाति यत्तज्ज्ञानमिदं प्रिये ॥
प्रातिभं तत्समाख्यातं तत्त्वज्ञानस्य भावनात् ।

इति ॥ १७४ ॥

एतदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

**भस्मच्छन्नाग्निवत्स्फोटच्चं प्रातिभे गौरवागमात् ॥१७५॥**
**बीजं कालोप्तसंसिक्तं यथा वर्धेत तत्तथा ।**
**योगयागजपैरुक्तैर्गुरुणा प्रातिभं स्फुटेत् ॥१७६॥**

यथा हि भस्मच्छन्नोऽग्निर्मुखमारुतादिना स्फुटतां यायात्, यथा वा स्वकाल एवोक्तं संसिक्तं च बीजमङ्कुरपल्लवादिरूपतयाभिव्यक्तिमियात्, तथा प्रातिभमपि ज्ञानं गुरूपदिष्टैर्यागयोगादिभिरिति । तदुक्तं

'यथाग्निर्भस्मना च्छन्नस्तदपास्येन्धनेधितः ।
समीरणबलाविष्टो भूरितेजा वरानने ॥
प्रभविष्णुः प्रकाशार्चिरेवमेतद्भवेत्स्फुटम् ।'

इति ।

'यथोक्तं कालतो बीजं तत्सुसिक्तमथ क्रमात् ।
अङ्कुरैः पल्लवैराढ्यं तत्पुष्पादिफलान्वितम् ॥
व्यापकं विटपं तद्वद्गुरुतः प्रातिभं प्रिये ।'

इति च ॥ १७६ ॥

एवं गुर्वाम्नायगतं प्रातिभं ज्ञानं निरूप्य, पात्रोपकृतं तदेव स्वाभाविकं निरूपयितुं, प्रथमं तावद्विवेकस्यैव स्वरूपं निरूपयति

**विवेकोऽतीन्द्रियस्त्वेष यदायाति विवेचनम् ।**
**पशुपाशपतिज्ञानं स्वयं निर्भासते तदा ॥१७७॥**
**प्रातिभे तु समायाते ज्ञानमन्यत्तु सेन्द्रियम् ।**
**वागक्षिश्रुतिगम्यं चाप्यन्यापेक्षं वरानने ॥१७८॥**
**तत्त्यजेद्बुद्धिमास्थाय प्रदीपं तु यथा दिवा ।**

यः पुनरतीन्द्रियः प्रमाणागोचर एष संविल्लक्षणोऽर्थो विचारपदवीमभ्युपेयात् स स्वपरामर्शात्मा विवेको नाम, यत्तस्मिन्सति स्वयमनन्यापेक्षमेव बध्यबन्धबन्धयितृविषयं प्रातिभं ज्ञानं परिस्फुरेत्, यस्मिन्नभ्युदिते दिनकृत्स्थानीयां बुद्धिं सम्यग्ज्ञानमास्थाय प्रदीपमिव दिने तदन्यत्संकुचितं ज्ञानं वागुपलक्षितैः कर्मेन्द्रियैरक्षिश्रुत्युपलक्षितैर्बुद्धीन्द्रियैश्च गम्यं सेन्द्रियमन्तःकरणैर्गम्यं च, अत एवान्यापेक्षं त्यजेत् । एतदवधीरणेन महाप्रकाश एव विश्रान्तो भवेदित्यर्थः ।

तदुक्तं

'विवेकोऽतीन्द्रिये भावे यदायाति विवेचनम् ।
पशुपाशपतिज्ञानं स्वयमेति विचारताम् ॥
प्रातिभे तु समायाते ज्ञानमन्यत्तु सेन्द्रियम् ।
वागक्षिश्रुतिगम्यं तु अन्यापेक्षं वरानने ॥
तत्त्यज्येद्बुद्धिमास्थाय प्रदीपं तु यथा दिवा ।

इति ॥

अत एवास्यावार्ग्दर्शिवैलक्षण्यमपि जायत इत्याह

**प्रादुर्भूतविवेकस्य स्याच्चिचदिन्द्रियगोचरे ॥१७९॥**
**दुराच्छ्रुत्यादिवेधादिर्वृद्धक्रीडाविचित्रिता ।**

प्रादुर्भूतविवेकस्य हि साधकस्य शब्दादाविन्द्रियार्थे विषये दूराच्छ्रुत्यादि-विचित्रिता चित् स्यात् देशकालाकारविप्रकृष्टादिविषया संवित्तिरस्य जायते इत्यर्थः । तदुक्तं

'प्रादुर्भूतविवेकस्य लक्षणं यत्प्रवर्तते ।
तथा ते कथयिष्यामि येन येनेन्द्रियेण तु ॥
साध्यं यत्तस्य तस्यैवं पाटवं जायते भृशम् ।
दूराच्छ्रवणविज्ञानं मननं चावलोकनम् ॥'

इति ॥

'क्रीडाकर्माण्यथोक्तानि सर्वतन्त्रोदितानि तु ।
क्षणेनानुभवेत्तानि शक्तिज्ञानोपबृंहितः ॥
षट्चक्रं षोडशाधारं कुलं जानाति सुव्रते ।
मन्त्रवेधादि कुरुते स्वस्थावेशादिकानि तु ॥
क्षणादन्यानि विशते पुराणि नगनन्दिनि ॥'

इति च ॥

प्ररूढविवेकस्यास्य पुनरेवं सिद्धिषु वैमुख्यात्परसंविद्विश्रान्तिरेव भवेदित्याह

**सर्वभावविवेकात्तु सर्वभावपराङ्मुखः ॥१८०॥**
**क्रीडासु सुविरक्तात्मा शिवभावैकभावितः ।**
**माहात्म्यमेतत्सुश्रोणि प्रातिभस्य विधीयते ॥१८१॥**
**स्वच्छायादर्शवत्पश्येद्बहिरन्तर्गतं शिवम् ।**

इह खलु सर्वेषां भावानां संविदेव सतत्त्वं, न तु बाह्यं किंचिन्नीलादिरूप-त्वमित्येवमात्मकाद्विवेकात्तद्वैवश्यहीनोऽत एव परपुरप्रवेशादिप्रायासु क्रीडासु विरक्तात्मत्वात्परप्रकाशमय्यां शिवसत्तायामेव प्राधान्येन विश्रान्तो येन दर्पण इव बिम्बप्रतिबिम्बोदयात्मना स्वं सर्वत्र शिवमेव बहिरन्तर्गतं पश्येत्तदेकघना-कारतया विश्वं साक्षात्कुर्यादित्यर्थः । ननु कथमेकदैवायं बहिरन्तश्च शिवं द्रष्टुं शक्नुयादित्याशङ्क्योक्तं 'प्रातिभस्यैतन्माहात्म्यं विधीयते' इति ॥

एवं चास्य हेयमुपादेयं वा किंचिन्नास्ति इत्ययमकिंचित्करीषु परिमितासु सिद्धिषु निबन्धनभूतं प्रतिनियतं ध्यानाद्यपहाय परामेव संविदं परं परामृशे-दित्याह

**हेयोपादेयतत्त्वज्ञस्तदा ध्यायेन्निजां चितिम् ॥१८२॥**

तदेति प्रातिभस्यैवं माहात्म्ये सतीत्यर्थः। तदुक्तं

'सर्वभावविवेकेन सर्वभावपराङ्मुखः।
विवेकी सुविरक्तात्मा शिवभावैकतत्परः॥
प्राकाम्यमेतत्सुश्रोणि प्रातिभस्य विधीयते।

इति।

'यथादर्शगतां च्छातां पश्यति स्वां तथा प्रिये।
बहिरन्तःस्थितं देवं शिवं सर्वगतं विभुम्॥'

इति।

'स्वप्नेन्द्रजालवत्सर्वं सिद्धियोगं विभावयेत्।
दृष्ट्वैवं लक्षणं भद्रे प्रातिभस्य तु साधकः॥
हेयोपादेयतत्त्वज्ञस्तदा ध्यायेच्छिवं विभुम्।'

इति च॥

ननु अकिंचित्कर्यश्चेत्सिद्धयस्तत्किमर्थमुक्ता इत्याशङ्क्याह

**सिद्धिजालं हि कथितं परप्रत्ययकारणम्।**
**इहैव सिद्धाः कायान्ते मुच्येरन्निति भावनात् ॥१८३॥**

सिद्धिर्हि नाम परेषां प्रत्ययमात्रम्, अन्यथा देहान्ते भुक्तिरिति कस्य समाश्वासः स्यात्॥

यस्य पुनः परप्रत्ययानपेक्षत्वेन परतत्त्व एव भावनादार्ढ्यं स जीवन्नेव मुक्त इत्याह

**परभावनदार्ढ्यात्तु जीवन्मुक्तो निगद्यते।**

एतदेवोपसंहरति

**एतत्ते प्रातिभे भेदे लक्षणं समुदाहृतम् ॥१८४॥**

अत्र च न केवलमेतदेव लक्षणं यावदन्यदपीत्याह

**शापानुग्रहकार्येषु तथाभ्यासेन शक्तता।**

शक्ततेत्यर्थात्प्रादुर्भूतविवेकस्य। प्ररूढविवेको हि क्रीडाप्रायासु सिद्धिषु अनासङ्गान्माध्यस्थ्यमवलम्बमानः परतत्त्व एव विश्रान्तो, येनासौ स्वयं मुक्तः सन् परानपि मोचयेत्॥

तदाह

**तेषूदासीनतायां तु मुच्यते मोचयेत्परान् ।।१८५।।**

नन्वात्मा स्वत एव शुद्धबोधस्वभाव इति किं नामास्यावशिष्यते यत्प्रतिभा कुर्यादिति किं तयास्य इत्याशंक्याह

**भूतेन्द्रियादियोगेन बद्धोऽणुः संसरेद्ध्रुवम् ।**

**स एव प्रतिभायुक्तः शक्तितत्त्वं निगद्यते ।।१८६।।**

**तत्पातावेशतो मुक्तः शिव एव भवार्णवात् ।**

स एव भूतेन्द्रियादियुक्तो बद्धोऽणुः प्रतिभया युक्तः प्रादुर्भूतविवेकश्चेत् तच्छक्तितत्त्वं निगद्यते शुद्धविद्यादशाधिशायी भवेत् येन तदनुग्रहनिग्रहाद्यनेककार्यंकरणप्रवणतामियात् । तत्रैव लब्धप्ररोहः पुनरसौ भवार्णवान्मुक्तः शिव एव तथाणुरूपतावधीरणेन शक्तिनिःश्रेणिकाक्रमणक्रमेण परधाराधिरोहितया परस्यामेव संविदि विश्रान्तो भवेदित्यर्थः । एतेन चोद्यसमाधानाभ्यामुपक्रान्तं नरशक्तिशिवात्मकं तत्त्वत्रयमेव प्रातिभविज्ञानात्मकतां यायादिति निर्वाहितम् । तदुक्तं

'यदा देवि महान्स्थूलो गुणत्रयसमन्वितः ।
भूतेन्द्रियादियोगेन बध्यते चाप्यणुस्तदा ।।
संसारे संसरेत्तेन बद्धोऽणुर्वरवर्णिनि ।
स एव प्रतिभायुक्तः शक्तितत्त्वं निगद्यते ।।
तत्पातावेशतो जन्तुर्मुच्यते तु भवार्णवात् ।
हित्वा कारणषट्कं तु शिवतत्त्वे लयं व्रजेत् ।।
इति ते सर्वमाख्यातं यथाभेदद्वयं प्रिये ।'

इति ।।

एवमुपपादितेऽपि प्रातिभस्य द्वैधे देवी पुनः प्रश्नयति

**नन्वाचार्यात्सेन्द्रियं तज्ज्ञानमुक्तमतीन्द्रियम् ।।१८७।।**

**विवेकजं च तद्बुद्ध्या तत्कथं स्यान्निरिन्द्रियम् ।**

इह तावद्गौरवं ज्ञानं बुद्ध्यान्तःकरणनिर्वर्त्यत्वात्सेन्द्रियमुक्तं, विवेकजं च तन्निरिन्द्रियम् । तत्र तद्विवेकजं ज्ञानं 'बुद्धिमास्थाय' इत्याद्युक्त्या बुद्ध्योपलक्षितमपि कथं निरिन्द्रियं स्यात् शशविषाणवदत्यन्तमसदेवेत्यर्थः । तदुक्तं

'सेन्द्रियं चैव गुरुतो ज्ञानमुक्तमतीन्द्रियम् ।
विवेकजन्म नो बुद्धया विना देव प्रवर्तते ॥
निरिन्द्रियत्वं तु कथं प्रोच्यते तस्य शङ्कर ।
एतच्छशविषाणेन प्रतिभाति समं मम ॥'

इति ॥

एवमुक्तश्च भगवान् प्रत्युवाचेत्याह

**इति पृष्ठोऽभ्यधात्स्वान्तधियोर्जाडयैकवासनात् ॥१८८॥**
**अक्षत्वं प्रविवेकेन तच्छित्तौ भासकः शिवः ।**

इह मनोबुद्धयोर्जाडयैकलक्षणात्संस्कारादुल्लसता परस्परस्य संकल्प्याद-ध्यवसेयाच्च विषयात्प्रकृष्टेन भेदेन अक्षत्वमिन्द्रियत्वं यतोऽनयोर्बन्धकत्वम् । तस्य च जाड्यसंस्कारकारणस्य भेदस्यावृत्त्या यथोक्तस्वरूपतया प्रकृष्टेन विवेकेन च्छित्तौ निवृत्तौ शिव एव भासको निरिन्द्रिया संविदेव सर्वतः समुज्जृम्भत इति सिद्धं विवेकजस्य ज्ञानस्यातीन्द्रियत्वम् ॥

ननु जाड्यात्मैव संस्कारो भेदनिबन्धनमिति केनोक्तमित्याशंक्याह

**संस्कारः सर्वभावानां परता परिकीर्तिता ॥१८९॥**

परतेति भिन्नतेत्यर्थः । परिकीर्तितेति सर्वैः । यदभिप्रायेणैव प्राक्

'परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम् ।' ( ३।१०१ )

इत्याद्युक्तम् । तदुक्तं

'इन्द्रियत्वं मनोबुद्धयोर्वासनातः सुरेश्वरि ।
जडत्वात्तेषु तद्भावादिन्द्रियत्वं तु बन्धकम् ॥
विवेकयुक्तया तच्छेदः शिवतत्त्वप्रकाशकः ।
संस्कारः सर्वभावानां परता परिकीर्तिता ॥'

इति ॥ १८९ ॥

सा चेह नास्तीत्याह

**मनोबुद्धी न भिन्ने तु कस्मिंश्चित्कारणान्तरे ।**
**विवेके कारणे ह्येते प्रभुशक्त्युपबृंहिते ॥१९०॥**

इह हि मनोबुद्धी मूलकारणे विवेके समुल्लसति कस्मिंश्चिच्छुद्धविद्यात्मनि कारणान्तरे स्वस्वरूपतिरस्कारात्तद्रूपताजन्मने न भिन्ने भवतो यत एते प्रभुशक्त्युपबृंहिते तदैकात्म्यमापन्ने इत्यर्थः ॥ १९० ॥

ननु यद्येवं, तन्मनोबुद्धी विना ज्ञानस्योत्पत्तिरेव न स्यादिति कृतं निरिन्द्रियत्वादिविचारेण इत्याशङ्क्याह

**न मनोबुद्धिहीनस्तु ज्ञानस्याधिगमः प्रिये ।**
**परभावात्तु तत्सूक्ष्मं शक्तितत्त्वं निगद्यते ॥१९१॥**

न हि मनो बुद्धि वा विहाय ज्ञानस्याधिगमोऽवभासो भवेत्, किंतु ते एव मनोबुद्धी प्रोक्तयुक्त्या स्वस्वरूपनिमज्जनेन सूक्ष्मं शाक्तं रूपमधिकृत्य एतज्ज्ञानं जनयत इत्युक्तं

'परभावात्तु तत्सूक्ष्मं शक्तितत्त्वं निगद्यते ।'

इति ॥ १९१ ॥

ननु यद्येवं, तद्विवेकस्याप्यत्र कस्मात्कारणत्वमुक्तमित्याशङ्क्याह

**विवेकः सर्वभावनां शुद्धभावान्महाशयः ।**

महाशय इति सर्वभावक्रोडीकरणसहिष्णुरित्यर्थः ॥

ननु बुद्धिरपि उभयतो दर्पणप्रख्या भोक्तृभोग्यात्मसर्वभावपरिस्फुरणसहिष्णुरित्युक्तं, तत्कथं तामपहाय विवेकस्य एवंरूपत्वमुच्यत इत्याह

**बुद्धितत्त्वं तु त्रिगुणमुत्तमाधममध्यमम् ॥१९२॥**
**अणिमादिगतं चापि बन्धकं जडमिन्द्रियम् ।**

त्रिगुणत्वादेव च उत्तमाधममध्यममित्युक्तम्, अणिमादिगतत्वादेव भोगजालसक्तिकारितया बन्धकम् । तदुक्तं

'बुद्धितत्त्वं महादेवि प्रधानाशयगोचरम् ।
तमो रजस्तथा सत्त्वमुत्तमाधममध्यमम् ॥
अणिमादिविभेदेन भोगजालसमावृतम् ।'

इति ॥

इह

'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।'

इति भङ्ग्या प्रातिभादेव चेन्मुक्तिस्तत्किमनेकायाससाध्यया दीक्षया इति पुनर्देवी प्रश्नयति

**ननु प्रातिभतो मुक्तौ दीक्षया किं शिवाध्वरे ॥१९३॥**

तदुक्तं

'प्रातिभेन महेशान मुच्यते यदि पुद्गलः ।
तत्किमर्थं शिशोर्दीक्षा क्रियते तु शिवाध्वरे ॥'

इति ॥ १९३ ॥

एतदपि परमेश्वरः प्रत्युक्तवानित्याह

**ऊचेऽज्ञाना हि दीक्षायां बालबालिशयोषितः ।**
**पाशच्छेदाद्विमुच्यन्ते प्रबुद्ध्यन्ते शिवाध्वरे ॥१९४॥**
**तस्माद्दीक्षा भवत्येषु कारणत्वेन सुन्दरि ।**
**दीक्षया पाशमोक्षे तु शुद्धभावाद्विवेकजम् ॥१९५॥**

एष्विति बालादिष्वज्ञानेषु, अतश्चाज्ञविषया दीक्षा इति विशेषः। कारणत्वेनेति मुक्तेः प्रबोधस्य च। अत एव तेषां दीक्षया पाशमोक्षे कृते शुद्धभावात् विवेकजं प्रातिभं ज्ञानं समुदियात् ॥

ननु एतन्न्यायमुखेनैव कस्मान्नोपपादितं, किं प्रतिपदं तद्ग्रन्थपाठेनेत्याशंक्याह

**इत्येष पठितो ग्रन्थः स्वयं ये बोद्धुमक्षमाः ।**
**तेषां शिवोक्तिसंवादाद्बोधो दार्ढ्यं व्रजेदिति ॥१९६॥**

एतच्च न केवलमत्रैवोक्तं, यावदन्यत्रापीत्याह

**श्रीमन्निशाटने चात्मगुरुशास्त्रवशात्त्रिधा ।**
**ज्ञानं मुख्यं स्वोपलब्धि विकल्पार्णवतारणम् ॥१९७॥**
**मन्त्रात्मभूतद्रव्यांशदिव्यतत्त्वादिगोचरा ।**
**शङ्का विकल्पमूला हि शाम्येत्स्वप्रत्ययादिति ॥१९८॥**

यद्यप्यत्र गुरुतः शास्त्रतः स्वतश्चेति त्रिधा ज्ञानमुक्तं, तथापि विकल्पार्णवतारकत्वात्स्वोपलब्धि स्वत उद्भूतं ज्ञानं मुख्यं यतस्तीव्रमध्यशक्तिपातवतः स्वप्रत्ययादेव प्राधान्येन विकल्पमूला मन्त्रादिविषया षोढा शङ्का शाम्येदविकल्पस्वात्मसंविद्विश्रान्तो भवेदित्यर्थः। अंशेति सिद्धाद्या मन्त्रांशकास्तत्प्रकारत्वान्मन्त्रशङ्कायामेवान्तर्भूताः। आदिशब्दः प्रकारे। तेन द्रव्यशङ्काप्रकारभूताया जातिशङ्काया अपि ग्रहणम्। तदुक्तं तत्र

'त्रिप्रत्ययमिदं ज्ञानमात्मा शास्त्रं गुरोर्मुखम् ।
प्राधान्यात्स्वोपलब्धिः स्याद्विकल्पार्णवतारिणी ॥
विकल्पाज्जायते शङ्का सा शङ्कां बन्धरूपिणी ।
बन्धोऽन्यो न हि विद्येत ऋते शङ्का विकल्पजाम् ॥
विकल्पायासयुक्तस्य न हि स्याच्छ्रेयसी गतिः ।
मन्त्रशङ्कात्मशङ्का च द्रव्यशङ्का तथा पुनः ॥
भुतशङ्का तथा दिव्यकर्मशङ्का परा मता ।
पञ्चधा तु स्मृता शङ्का तत्त्वशङ्का परास्मृता ॥
षड्विधां कथयिष्यामि यथा मोक्षमवाप्स्यसि ।'

इत्याद्युपक्रम्य

'तस्मात्सर्वप्रयत्नेन स्वात्मप्रत्ययकारणम् ॥
स्वसंवित्तिकरं नृणां नरशक्तिशिवात्मकम् ॥
बोद्धव्यं लयभेदन यथाप्रत्ययमात्मनि ।
विकल्पक्षीणाचित्तस्तु परमाद्वैतभावितः ॥
मुच्यते नात्र सन्देह इति सत्यं ब्रवीमि ते ॥

इति ॥ १९८ ॥

ननु श्रीपूर्वशास्त्रमधिकृत्येदमुच्यते इत्युपक्रान्तं, तत्किमिह श्रीमन्नन्दिशिखाद्यवान्तरग्रन्थार्थकथनेनेत्याशङ्क्याह

**एनमेवार्थमन्तःस्थं गृहीत्वा मालिनीमते ।**

मालिनीमते निरूपितमिति प्राच्येन संबन्धः तदेव पठति

**एवमस्यात्मनः काले कस्मिंश्चिद्योग्यतावशात् ॥१९९॥**
**शैवी संबध्यते शक्तिः शान्ता मुक्तिफलप्रदा ।**
**तत्संबन्धात्ततः कश्चित्तत्क्षणादपवृज्यते ॥२००॥**
**इत्युक्त्वा तीव्रतीव्राख्यविषयं भाषते पुनः ।**
**अज्ञानेन सहैकत्वं कस्यचिद्विनिवर्तते ॥२०१॥**
**रुद्रशक्तिसमाविष्टः स यियासुः शिवेच्छया ।**
**भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ॥२०२॥**

**तमाराध्य ततस्तुष्टाद्दीक्षामासाद्य शाङ्करीम् ।**
**तत्क्षणाद्वोपभोगाद्वा देहपाताच्छिवं व्रजेत् ।।२०३।।**

एतच्च स्वयमेव व्याचष्टे

**अस्यार्थ आत्मनः काचित्कलनामर्शनात्मिका ।**
**स्वं रूपं प्रति या सैव कोऽपि काल इहोदितः ।।२०४।।**
**योग्यता शिवतादात्म्ययोगार्हत्वमिहोच्यते ।**

अस्य श्लोकचतुष्टयस्यायमर्थः । यदात्मनो या काचिद्बहिर्मुखताविलक्षणा स्वात्मप्रत्यवमर्शनात्मिका कलना, सैवेह कोऽपि कर्मसाम्यादिविलक्षणान्तःस्पर्शात्मा कालो, यदुक्तं कस्मिंश्चित्काल इति । शिवतादात्म्यलक्षणं योगमर्हति इति योग्यस्तस्य भावो योग्यता ताद्रूप्यग्रहणसहिष्णुत्वमित्युक्तं योग्यतावशादिति ।।

ननु स्वात्मप्रत्यवमर्शो व्यतिरिक्तं तावन्निमित्तं किंचिन्नापेक्षणीयं तत्पूर्वमपि सोऽस्तु, यद्वा इदानीमपि माभूदित्याशङ्क्याह

**पूर्वं किं न तथा कस्मात्तदैवेति न संगतम् ।।२०५।।**
**तथाभासनमुज्झित्वा न हि कालोऽस्ति कश्चन ।**

यदि नाम हि परस्य प्रकाशस्य तथास्वरूपपरामर्शात्मकतयावभासनमपहाय तन्निरपेक्षः स्वतन्त्रः कश्चित्कालः स्यात्, तत् तदधिकारेण चोद्येतापि यदिदानीमिव पूर्वमपि कस्मान्नैतदिति । स एव पुनः प्रकाश्यदशामधिशयानः प्रकाश्यत्वादेवप्रकाशैकात्म्यापत्तेस्तदतिरेकेण नास्तीत्यसंगतमेवैतत् ।

ननु यद्येवं, तत्कथमेतदतीतवर्तमानाद्याभाससंभिन्नतया भावजातं भायादित्याशङ्क्याह

**स्वातन्त्र्यात्तु तथाभासे कालशक्तिर्विजृम्भिताम् ।।२०६।।**
**नतु पर्यनुयुक्त्यै सा शिवे तन्महिमोदिता ।**

मायापदे पुनस्तत्स्वातन्त्र्यादतीतवर्तमानाद्याभासनिमित्तं विजृम्भतां नाम कालशक्तिः, परस्मिन्प्रकाशे पुनस्तद्भेदमाधातुं न समर्था यतस्त-

त्स्फारमात्रमेवासावित्युक्तं प्राग्बहुशः। एवमात्मनः स्वस्वरूपामर्शने सति शिवतादात्म्यार्हतया तच्छक्तिः संबध्यत इति प्रथमश्लोकार्थः॥

ननु

'अवस्थात्रितयेऽप्यस्मिंस्तिरोभावनशीलया ।
शिवशक्त्या समाक्रान्ताः प्रकुर्वन्ति विचेष्टितम् ॥ (मा० वि० ५।३६)

इत्याद्युक्त्या सदैवैषां शिवशक्तिसंबन्धोऽस्ति, तत्कस्मिंश्चित्काले सा संबध्यते इत्येतत्कस्मादुक्तमित्याशङ्क्यां प्रदर्श्य प्रतिक्षिपति

**ननु शैवी महाशक्तिः संबद्धैवात्मभिः स्थिता ।**
**सत्यं साच्छादनात्मा तु शान्ता त्वेषा स्वरूपदृक् ॥२०७॥**

आच्छादनात्मेति प्रकाशात्मस्वरूपावरणात्, स्वरूपदृगिति तत्तदावरण-विगमनेन परिपूर्णस्वस्वरूपप्रकाशिकेत्यर्थः। यदुक्तं

'वामा संसारवमना स्वरूपावरणात्मिका ।'

इति। तथा

'क्रमेण सर्वभोगात्तसंस्कारार्थपरम्पराम् ।
संजिहीर्षुर्महापूर्णा ज्येष्ठा मोक्षैकपद्धतिः ॥'

इति ॥ २०७ ॥

नन्वस्य स्वरूपावरणदर्शनाद्यनेककार्यकरणप्रवणतया विमर्शमयी स्वातन्त्र्यशक्तिरेकैव सर्वतः समुज्जृम्भते, तत् आच्छादनात्मा वामेति शान्ता च ज्येष्ठा इत्येतत्कथमुक्तमित्याशङ्क्याह

**क्षोभो हि भेद एवैक्यं प्रशमस्तन्मयी ततः ॥२०८॥**

भेदो हि क्षोभ एव न तु शान्तत्वम्। ऐक्यमभेदश्च प्रशम एव न तु क्षोभः। ततो हतोरेषा शक्तिस्तन्मयो क्षोभमयी प्रशममयी च भवेत्, येनोक्तमियमाच्छादनात्मा शान्ता चेति॥

ननु भवत्वेवं, शान्ता पुनः किं समनन्तरमेव स्वरूपं दर्शयेदुत केन-चित्क्रमेणेत्याशङ्क्याह

**तथा शान्त्या तु संबद्धः स्थितः शक्तिस्वरूपभाक् ।**
**त्यक्ताणुभावो भवति शिवस्तच्छक्तिदार्ढ्यतः ॥२०९॥**

तया शान्त्या शान्तया शक्त्या पुनः संबद्धः स्थितः सन् आत्मा शक्तिस्वरूपभाक् साक्षाच्छुद्धविद्यादशाधिशायी भवेत्, अत एव त्यक्ताणुभावः संस्तस्यामेव शक्तौ दार्ढ्यं तदावेशवैवश्यमाश्रित्य शिवो भवति तत्तदावरणतिरस्करिणीतिरस्कारादभिव्यक्तपूर्णकर्तृत्वसतत्त्वसंविदेकरूपः स्यादित्यर्थः। यदुक्तं समनन्तरमेव

'स एव प्रतिभायुक्तः शक्तितत्त्वं निगद्यते।
तत्पातावेशतो मुक्तः पशुरेव भवार्णवात्॥'

इति॥ २०९॥

नन्वेवमस्य स्वरूपलाभः किं सत्येव देहे भवेत्, उतासतीत्याशङ्क्याह

**तत्रापि तारतम्यादिवशाच्छीघ्रचिरादितः।**
**देहपातो भवेदस्य यद्वा काष्ठादितुल्यता॥२१०॥**

ननु अहंचमत्कारसारपरसंविदद्वयमयेऽपि अस्मद्दर्शने यदि जीवतोऽपि काष्ठादितुल्यता नाम मुक्तिस्तत्सर्वगुणच्छेदादेवंप्रायां मुक्तिमभिदधतामाक्षपादानां क इव उपहासावसर इत्याशङ्क्याह

**समस्तव्यवहारेषु पराचीनितचेतनः।**
**तीव्रतीव्रमहाशक्तिसमाविष्टः स सिध्यति॥२११॥**

स तीव्रतीव्रशक्तिभाक् समस्तेषु बाह्यव्यवहारेषु पराचीनितं पराचिभवं संपादितं चेतनं येन स पराङ्मुखीकृतानुसंधानः सिद्ध्यति परसंविच्चमत्कारानुभवलाभभाजनं भवतीत्यर्थः॥

एवमेतदुपसंहरन्नन्यदुपक्षिपति

**एवं प्राग्विषयो ग्रन्थ इयानन्यत्र तु स्फुटम्।**
**ग्रन्थान्तरं मध्यतीव्रशक्तिपातांशसूचकम्॥२१२॥**

प्राग्विषय इति तीव्रतीव्रशक्तिपातविषयः। इयानीति सार्धश्लोकरूपः। अन्यत्रेति मध्यतीव्रमन्दतीव्राख्ये शक्तिपातद्वये। मध्यतीव्राख्यस्य द्वितीयस्य शक्तिपातस्य प्राथमिकेनांशेन भागेन सूचकमर्थाद्द्वितीयेनांशेन, तच्च मन्दतीव्राख्यस्य तृतीयस्यास्य सूचकम्। यद्वक्ष्यति

'स इत्यन्तो ग्रन्थ एष द्वितीयविषयः स्फुटः।
अन्यस्तु मन्दतीव्राख्यशक्तिपातविधिं प्रति॥' २१७॥

इति॥ २११॥

तदेव व्याचष्टे

**अज्ञानरूपता पुंसि बोधः संकोचिते हृदि ।**
**संकोचे विनिवृत्ते तु स्वस्वभावः प्रकाशते ।।२१३।।**

इह हृदि सारभूते विमर्शात्मनि रूपे, संकोचिते गुणीभावमापादिते, यः पुंसि परिमितात्मनि अपूर्णख्यातिरूपो बोधः सैवाज्ञानरूपता तेन सहैकत्वमित्यर्थः । स एव संकोचहेतुकश्चेत्कस्यचिन्निवृत्तः, तदास्य स्व एवानन्यसाधारणः, स्वभावः प्रकाशते पूर्णज्ञानक्रियो भवेदित्यर्थः । तन्निवृत्तौ च पारमेश्वरः शक्तिपात एव निमित्तम् । तदुदये च तानि तानि चिह्नानि जायन्ते । येनास्य शक्तिपातो वृत्त इति सर्व उपलक्षयेत् ॥ २१३ ॥

तदाह

**रुद्रशक्तिसमाविष्ट इत्यनेनास्य वर्ण्यते ।**
**चिह्नवर्गो य उक्तोऽत्र रुद्रे भक्तिः सुनिश्चला ।।२१४।।**

**मन्त्रसिद्धिः सर्वतत्त्ववशित्वं कृत्यसंपदः ।**
**कवित्वं सर्वशास्त्रार्थबोद्धृत्वमिति तत्क्रमात् ।।२१५।।**

**स्वतारतम्ययोगात्स्यादेषां व्यस्तसमस्तता ।**
**तत्रापि भुक्तौ मुक्तौ च प्राधान्यं चर्चयेद्बुधः ।।२१६।।**

उक्त इति श्रीपूर्वशास्त्रे । तदुक्तं तत्र

'रुद्रशक्तिसमावेशस्तत्र नित्यं प्रतिष्ठितः ।
सति तस्मिंश्च चिह्नानि तस्यैतानि विलक्षयेत् ॥
तत्रैतत्प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला ।
द्वितीयं मन्त्रसिद्धिः स्यात्सद्यः प्रत्ययकारिका ॥
सर्वतत्त्ववशित्वं च तृतीयं लक्षणं स्मृतम् ।
प्रारब्धकार्यनिष्पत्तिश्चिह्नमाहुश्चतुर्थकम् ॥
कवित्वं पञ्चमं ज्ञेयं सालङ्कारं मनोहरम् ।
सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते ॥' ( ८।१३ )

इति । कृत्यसंपद इति कृत्यानां प्रारब्धानां कार्याणां निष्पत्तय इत्यर्थः । तत्क्रमादिति तस्या रुद्रशक्तेः क्रमाद्यथायथमतिशयादित्यर्थः । अत एवाह

स्वेत्यादि। स्वतारतम्येत्यर्थाद्रुद्रशक्तेः। तत्रापीति, एवं व्यस्तसमस्ततायामपीत्यर्थः। तथाहि

'भक्तिरेव परां काष्ठां प्राप्ता मोक्षोऽभिधीयते।'

इत्युक्त्या भक्त्यादीनां मुक्तौ, मन्त्रसिद्ध्यादीनां च भुक्तौ प्राधान्यमन्यत्र चानुषङ्ग इति। समस्तं चेदं चिह्नजातमस्मिन्नेव ग्रन्थकारे प्रादुरभूदिति प्रसिद्धिः। यद्गुरवः

'अकस्मात्सर्वशास्त्रार्थज्ञत्वाद्यं लक्ष्मपञ्चकम्।
यस्मिन्छ्रीपूर्वशास्त्रोक्तमदृश्यत जनैः स्फुटम्॥'

इति॥ २१६॥

एतदुपसंहरन्मन्दतीव्रग्रन्थं विभजति

**स इत्यन्तो ग्रन्थ एष द्वितीयविषयः स्फुटः।**
**अन्यस्तु मन्दतीव्राख्यशक्तिपातविधिं प्रति॥२१७॥**

एतदेव व्याचष्टे

**मन्दतीव्राच्छक्तिबलाद्यियाषास्योपजायते।**
**शिवेच्छावशयोगेन सद्गुरुं प्रति सोऽपि च॥२१८॥**
**अत्रैव लक्षितः शास्त्रे यदुक्तं परमेष्ठिना।**

शिवेच्छावशयोगेनेति शिवेच्छाया वशात्स्वातन्त्र्याद्योगेन शैवी शक्तिरनन्यापेक्षतयैवास्य संबध्यत इत्यर्थः। तद्योगश्चानेकविध इति विभक्तं मन्दतीव्राच्छक्तिबलादिति। सोऽपीति सद्गुरुः। अत्रैव शास्त्रे इति प्रक्रान्ते श्रीपूर्वसंज्ञके॥

तदेव पठन्ति

**यः पुनः सर्वतत्त्वानि वेत्त्येतानि यथार्थतः॥२१९॥**
**स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः।**
**दृष्टाः संभावितास्तेन स्पृष्टाश्च प्रीयचेतसा॥२२०॥**
**नराः पापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि।**
**ये पुनर्दीक्षितास्तेन प्राणिनः शिवचोदिता॥२२१॥**

**ते यथेष्टं फलं प्राप्य पदं गच्छन्त्यनामयम् ।**

यथार्थंत इति पाञ्चदश्यादिरूपतया सर्वसर्वात्मकत्वेनेत्यर्थः । मत्सम इति श्रीश्रीकण्ठनाथोक्तिः । एतदेव मन्त्रवीर्यप्रकाशक इत्यादिना प्रकाशितम् । संभाविता इति निर्ध्याताः । प्रमुच्यन्त इति ज्ञानाग्निदग्धत्वात् । शिवचोदिता इति आयातशक्तिपाताः । यथेष्टं फलमिति भुक्तिमुक्तिलक्षणम् ॥

ननु शिवेच्छयास्य सद्गुरुं प्रति यियासा जायते इत्यत्र किं लिङ्गमित्याशङ्क्याह

**किं तत्त्वं तत्त्ववेदी क इत्यामर्शनयोगतः ॥२२२॥**

**प्रतिभानात्सुहृत्सङ्गाद्गुरौ जिगमिषुर्भवेत् ।**

**एवं जिगमिषायोगादाचार्यः प्राप्यते स च ॥२२३॥**

**तारतम्यादियोगेन संसिद्धः संस्कृतोऽपि च ।**

अस्य हि शिवशक्तिपातवशादेवमामर्शयोगिनी प्रतिभा जायते कल्याणमित्रपरिचयो वा । यस्य हि स्वयमेवं प्रतिभा नोदियात्, तस्य तदासङ्गादिति उभयथाप्येवं प्रतिभायामुदितायां सद्गुरुं प्रति जिगमिषुर्भवेत् । अतो जिगमिषायोगाद्गतौ सत्यामाचार्यस्तेन प्राप्यते । स चाचार्यः शक्तिपातस्य तीव्रत्वात् प्रागुक्तलक्षणः सांसिद्धिकः, इतरथा तु संस्कृतः ॥

एवं चास्य उपलक्षणपरतया अवान्तरमपि तरतमभावं विभजति

**प्राग्भेदभागी झटिति क्रमात्सामस्त्यतोंशतः ॥२२४॥**

**इत्यादिभेदभिन्नो हि गुरोर्लाभ इहोदितः ।**

**तस्माद्दीक्षां स लभते सद्य एव शिवप्रदाम् ॥२२५॥**

**ज्ञानरूपां यथा वेत्ति सर्वमेव यथार्थतः ।**

**जीवन्मुक्तः शिवीभूतस्तदैवासौ निगद्यते ॥२२६॥**

तत्र प्राग्भेदभागी संसिद्धविषयो यो लाभः प्राप्तिः, स शक्तिपातस्य तारतम्ययोगात् गुरोः सामस्त्यतः सामस्त्येन अंशतः अंशेन प्रागुक्तनीत्या सर्वगस्यांशगतस्य चाक्रमेण क्रमेण वा इत्यादिभेदभिन्नो भवेत्, एवं संस्कृतविषयोऽपि कल्पितस्याकल्पितस्य वा इत्याद्यनुसर्तव्यम् । स चैवंविधात्तस्मादा-

चार्यादिवं दीक्षां लभते यथासौ तदैव शिवीभूतः सन् सर्वमेव यथार्थतो वेत्ति च जीवन्मुक्तश्च निगद्यते । यदुक्तं

'......................तत्क्षणाद्वा शिवं व्रजेत् ।'

इति ॥ २२६ ॥

ननु देहसंबन्धेऽप्यस्य कथमेवंरूपत्वं स्यादित्याशङ्क्याह

**देहसंबन्धिताप्यस्य शिवातायै यतः स्फुटा ।**

नहि तदानीमस्य देहादावात्माभिमानो भवेदिति भावः ॥

सा चेयमनेकप्रकारा दीक्षेत्याह

**अस्यां भेदो हि कथनात्सङ्गमादवलोकनात् ॥२२७॥**
**शास्त्रात्संक्रमणात्साम्यचर्यासंदर्शनाच्चरोः ।**
**मन्त्रमुद्रादिमाहात्म्यात्समस्तव्यस्तभेदतः ॥२२८॥**
**क्रियया वान्तराकाररूपप्राणप्रवेशतः ।**

कथनादिति तत्त्वस्य । संगमादिति संघटनामात्रात् । शास्त्रादिति व्याख्यानात् । साम्यचर्यासंदर्शनादिति साम्येन जात्यादिभेदतिरस्कारेण, बाह्यचर्यायाः संदर्शनात् विमर्शनादनुष्ठानादिति यावत् । चरोरिति कुण्डगोलकादेः । क्रिययेति होमादिरूपया । वा शब्दः समुच्चये । आन्तराकाररूपप्राणप्रवेशत इति बाह्यदेहापेक्षयाभ्यन्तराकारप्राणप्रवेशाद्योगक्रमेणेत्यर्थः । एतच्च शक्तिपातस्य तारतम्यात् व्यस्तं समस्तं वा भवेदित्युक्तं समस्तव्यस्तभेदत इति ॥

एवंविधया चानया 'कथनादुभयसामरस्यम्' इत्याद्युक्तनीत्या सत्यपि देहे परसंविद्विश्रान्तिर्जायते, येनायं जीवन्मुक्त इति व्यपदेशपात्रतामियात् । तदाह

**तदा च देहसंस्थोऽपि स मुक्त इति भण्यते ॥२२९॥**

किमत्र प्रमाणमित्याशङ्क्याह

**उक्तं च शास्त्रयोः श्रीमद्रत्नमालागमाख्ययोः ।**

तदेव पठति

**यस्मिन्काले तु गुरुणा निर्विकल्पं प्रकाशितम् ॥२३०॥**

**तदैव किल मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ।**

यन्त्रमिति अकिंचित्करत्वात् ॥

ननु यदि तदानीं देहादेर्यन्त्रप्रायता, तत्कथं सुखदुःखे स्यातां, स्यातां चेन्न मुक्तत्वमित्याशङ्क्याह

**प्रारब्धृकर्मसंबन्धाद्देहस्य सुखिदुःखिते ॥२३१॥**

**न विशङ्केत तच्च श्रीगमशास्त्रे निरूपितम् ।**

देहस्य देहबुद्ध्यादेरनात्मनः । न विशङ्केतेति सुखदुःखानुभवान्नास्मि मुक्त इति । ननु नेयं निर्मूला शङ्का, तत्कथमेवमुक्तमित्याशङ्क्याह 'तच्च श्रीगमशास्त्रे निरूपितम्' इति । चो ह्यर्थे ॥

तदेव पठति

**अविद्योपासितो देहो ह्यन्यजन्मसमुद्भुवा ॥२३२॥**

**कर्मणा तेन बाध्यन्ते ज्ञानिनोऽपि कलेवरे ।**

ननु देहप्रारब्धृणि त्रीणि जात्यायुर्भोगदानि कर्माणि संभवन्ति इति कथं कर्मणा इत्येकवचनेन निर्देशः, तच्छब्दस्य च यच्छब्दनिर्देश्यपरामृश्याथानुपलक्षणात् कथमुपपत्तिरित्याशङ्काद्वयं गर्भीकृत्याह

**जात्यायुर्भोगदस्यैकप्रघट्टकतया स्थितिः ॥२३३॥**

**उक्तैकवचनाद्धिश्च यतस्तेनेतिसंगतिः ।**

एकवचनादिति कर्मणेति । यतस्तेनेतिसंगतिरिति यतस्तेनेत्येवंरूपा हेतुहेतुमद्भावलक्षणा संगतिर्यस्यासौ एवंविधो हिरिति हिशब्दार्थ एवं तच्छब्देन परामृश्यत इत्यर्थः । तेन जन्मान्तरोपार्जितेन जात्यायुर्भोगदत्वात् त्रिविधेन एकप्रघट्टकतयोक्तेन कर्मणा यतो मायाधिष्ठितो देहो भवति, तेन कलेवरे सति ज्ञानिनोऽपि बाध्यन्ते सुखदुःखानुभवाद्बद्धा इव लक्ष्यन्ते इति श्रीगमग्रन्थार्थः । अनेन च उपभोगाद्वा शिवं व्रजेदिति विवृतम् ।

इदानीं तु देहपाताच्छिवं व्रजेदिति विवृणोति

**अभ्यासयुक्तिसंक्रान्तिवेधघट्टनरोधतः ॥२३४॥**

**हृतेर्वा　　मन्त्रसामर्थ्यात्पाशच्छेदप्रयोगतः ।**
**सद्योनिर्वाणदां　कुर्यात्सद्यःप्राणवियोजिकाम् ॥२३५॥**

अभ्यासः पौनः पुन्येन प्राणचारामर्शनम् । युक्तिर्वक्ष्यमाणजालप्रयोगादिरूपा । संक्रान्तिः परपुरप्रवेशादिः । वेधो मन्त्रादिरूपतया वक्ष्यमाणः । घट्टनं प्राणविक्षेपः । रोधः प्राणस्य गतागतपरिहारेण मध्यधामनि अवस्थापनम् । मन्त्रस्येति कालरात्र्यादेः । सद्य इति दीक्षासमकालम् ॥

न चेयं सर्वथा कार्येत्याह

**तत्र त्वेषोऽस्ति नियम आसन्ने मरणक्षणे ।**
**तां कुर्यान्नान्यथारब्धं कर्म यस्मान्न शुद्ध्यति ॥२३६॥**
**उक्तं च　पूर्वमेवैतन्मन्त्रसामर्थ्ययोगतः ।**
**प्राणैर्वियोजितोऽप्येष भुङ्क्ते शेषफलं यतः ॥२३७॥**
**तज्जन्मशेषं विविधमतिवाह्य ततः स्फुटम् ।**
**कर्मान्तरनिरोधेन　　शीघ्रमेवापवृज्यते ॥२३८॥**

अन्यथेति अनासन्ने मरणे । यदुक्तं

'दृष्ट्वा शिष्यं जराग्रस्तं व्याधिभिः परिपीडितम् ।
उत्क्रमय्य ततस्त्वेनं परतत्त्वे नियोजयेत् ॥'

इति । ननु अनासन्नमरणस्यापीयमस्तु को नियमः, अस्यां हि कृतायां तदैव मुक्तिः स्यादिति किं मरणासत्तिक्षणापेक्षादिविलम्बनेनेत्याशङ्क्योक्तमारब्धं कर्म यस्मान्न शुद्ध्यतीति । ननु इयं चेत्कर्मणः शोधिका तद्भविष्यत इवास्याप्यस्तु, न चेदस्येव तस्यापि मा भूदित्याशङ्क्योक्तमुक्तं पूर्वमेवैतदिति । पूर्वमिति नवमाह्निके । यदुक्तं तत्र

'आरब्धकार्यं देहेऽस्मिन्यत्पुनः कर्म तत्कथम् ।
उच्छिद्यतामन्यदशं निरोद्धुं न हि शक्यते ॥' ( १३१ )

इत्यादि । ननु अनया मन्त्रसामर्थ्यात्प्राणवियोग एव चेत्कृतस्तद्भोक्तुरेवाभावात् कस्य नामैतत्कर्म फलेदिति किं तच्छुद्ध्यशुद्धिविचारेणेत्याशङ्क्याह मन्त्रेत्यादि । शेषस्य शोधितादवशिष्टस्य देहारम्भकस्य इत्यर्थः । यतस्तस्मात् प्राक्तनाज्जन्मनः शेषं प्रारब्धकर्मकार्यं विचित्रमायुर्भोगादि ततो भोगादति-

वाह्य परिसमाप्य कर्मान्तरस्य भविष्यदादेरपि विलम्बकारिणोऽप्यन्यस्य कस्यचिदभावादपवृज्यते मुच्यत इत्यर्थः। तद्युक्तमुक्तमासन्न एव मरणक्षणे तां कुर्यादिति ॥ २३८ ॥

अत आह

**तस्मात्प्राणहरीं दीक्षां नाज्ञात्वा मरणक्षणम्।**
**विदध्यात्परमेशाज्ञालङ्घनैकफला हि सा ॥२३९॥**

एवं हि परमेश्वराज्ञोल्लङ्घनादन्यत्किंचिन्न सिद्धयति इत्यावेदितं स्यात् ॥ २३९ ॥

एवं प्रकृतमुपसंहरन्नन्यदवतारयति

**एकस्त्रिकोऽयं निर्णीतः शक्तिपातेऽप्यथापरः।**

एकस्त्रिक इति तीव्राख्यः ॥

तदेवाह

**तीव्रमध्ये तु दीक्षायां कृतायां न तथा दृढाम् ॥२४०॥**
**स्वात्मनो वेत्ति शिवतां देहान्ते तु शिवो भवेत्।**

न तथा दृढामिति अविकल्पस्वभावस्वात्मज्ञानसाक्षात्काराभावात् ॥
किमत्र प्रमाणमित्याशङ्क्याह

**उक्तं च निशिसंचारयोगसंचारशास्त्रयोः ॥२४१॥**

तदेवार्थद्वारेण पठति

**विकल्पात्तु तनौ स्थित्वा देहान्ते शिवतां व्रजेत्।**

यदुक्तं तत्र

'विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत्।'

इति ॥

**मध्यमध्ये शक्तिपाते शिवलाभोत्सुकोऽपि सन् ॥२४२॥**
**बुभुक्षुर्यत्र युक्तस्तद्भुक्त्वा देहक्षये शिवः।**
**मन्दमध्ये तु तत्रैव तत्त्वे क्वापि नियोजितः ॥२४३॥**

**देहान्ते तत्त्वगं भोगं भुक्त्वा पश्चाच्छिवं व्रजेत् ।**

यत्रेति अभिमते तत्त्वादौ। तदिति तत्रत्यमेव योगाभ्यासादिलब्धं भोगजालम् । भुक्त्वा इत्यर्थादनेनैव देहेन । अत एवोक्तं देहक्षये शिव इति । तत्रैवेति प्रक्रान्ते शक्तिपाते। क्वापि यथाभिमते। नियोजितः इत्यर्थाच्छिवलाभोत्सुकोऽपि सन्निति। भुक्त्वेत्यर्थाद्देहान्तरेण। अत एवोक्तं देहान्ते तत्त्वगं भोगं भुक्त्वेति । यदुक्तमनेनैवान्यत्र

'मध्यमध्याच्छिवतोत्सुकोऽपि भोगप्रेप्सुर्भवतीति तथैव दीक्षायां ज्ञानभाजनम् । स च योगाभ्यासलब्धमनेनैव देहेन भोगं भुक्त्वा देहान्ते शिव एव। निकृष्टमध्यात्तु देहान्तरेण भोगं भुक्त्वा शिवत्वमेति ॥'

( तं० सा० ११ आ० )

इति ॥

एवमप्यत्र तरतमभावः कश्चित्संभवति, येन विशेषान्तरमप्युदियादित्याह

**तत्रापि तारतम्यस्य संभवाच्चिरशीघ्रता ॥२४४॥**
**बह्वल्पभोगयोगश्च देहभूमाल्पताक्रमः ।**

तत्र प्रथमः प्रकारः पुत्रकविषयः। शिष्टं तु प्रकारद्वयं शिवधर्मिसाधकविषयमिति निरूपितम् ॥

इदानीं तु लोकधर्मिविषयमवशिष्टं शक्तिपातं निरूपयति

**तीव्रमन्दे मध्यमन्दे मन्दमन्दे बुभुक्षुता ॥२४५॥**
**क्रमान्मुख्यातिमात्रेण विधिनैत्यन्ततः शिवम् ।**

अत्रैवंप्रकारे मन्दाख्ये शक्तिपाते बुभुक्षुता अर्थाल्लोकधर्मिणः साधकस्य क्रमादतिमात्रेण मुख्या यथायथं प्रधानभूतेत्यर्थः। एवमप्यसौ लोकधर्मी पर्यन्ते विधिना स्वोचितेन दीक्षाप्रकारेण शिवमेति अपवृज्यत एवेत्यर्थः। यदुक्तमनेनैव

'भोगोत्सुकता यदा प्रधानभूता तदा मन्दत्वं पारमेश्वरमन्त्रयोगोपायतया यतस्तत्रौत्सुक्यम् । पारमेशमन्त्रयोगादेश्च यतो मोक्षपर्यन्तत्वमतः शक्तिपातरूपता। तत्रापि तारतम्यान्त्रैविध्यम् ॥'

इति। अयं चात्राशयः—यः कश्चित्तीव्रमन्दशक्तिपातवांल्लोकधर्मी, स दीक्षाबलात् देहान्ते क्वचन यथाभिमते भुवनादौ भोगान्भुक्त्वा शिवतां यायात्। यदुक्तं

'लोकधर्मिणमारोप्य मते भुवनभर्तरि।
तद्धर्मापादनं कुर्याच्छिवे वा मुक्तिकांक्षिणम् ॥' ( मृगेन्द्रत० )

इति। वक्ष्यति च

प्रारब्धदेहभेदे तु भुङ्क्तेऽसावणिमादिकम्।
भुक्त्वोर्ध्वं याति यत्रैष युक्तोऽथ सकलेऽकले ॥' ( १५।३१ )

इति। कश्चिच्च मध्यमन्दशक्तिपातवान् क्वचन भुवनादौ कंचित्कालं भोगान्भुक्त्वा, तदीश्वरदीक्षितः पर्यन्ते शिवतां गच्छेत्। मन्दमन्दशक्तिपातवान् पुनस्तत्रैव सालोक्यसामीप्यसायुज्यासादनक्रमेण चिरतरं कालं भोगान्भुक्त्वा, तत एव दीक्षामासाद्य शिवतामियात् ॥

श्रीपूर्वशास्त्रीयमेव ग्रन्थं मतान्तरेण व्याचष्टे

**अन्ये यियासुरित्यादिग्रन्थं प्राग्ग्रन्थसंगतम् ॥२४६॥**
**कुर्वन्ति मध्यतीव्राख्यशक्तिसंपातगोचरम्।**

प्राग्ग्रन्थसंगतमिति प्राग्ग्रन्थेन 'अज्ञानेन सह' इत्यादिना संगतं संबद्धमित्यर्थः। अत्रैव विशेषणद्वारेण हेतुर्मध्यतीव्राख्यशक्तिसंपातगोचरमिति ॥

तदेवाह

**यदा प्रतिभयाविष्टोऽप्येष संवादयोजनाम् ॥२४७॥**
**इच्छन्यियासुर्भवति तदा नीयेत सद्गुरुम्।**

यदा हि रुद्रशक्तिसमावेशादज्ञानविनिवृत्त्या प्रोदितप्रातिभज्ञानोऽप्येष मध्यतीव्रशक्तिपातवान् संवादयोजनामिच्छन् प्रागुक्तयुक्त्या संवाददार्ढ्यमुत्पादयितुं यियासुर्गुरुकुलं जिगमिषुर्भवति, तदा पारमेश्वर्या शक्त्या सद्गुरुं प्रति नीयेत तदाभिमुख्येनास्य प्रवृत्तिरुत्पाद्यत इत्यर्थः ॥

नचैतदविशेषेणैव भवेदित्याह

**न सर्वः प्रतिभाविष्टः शक्त्या नीयेत सद्गुरुम् ॥२४८॥**

**इति ब्रूते यियासुत्वं वक्तव्यं नान्यथा ध्रुवम् ।**

यियासुत्वमिति प्रागेवोक्तं ब्रूत इति सम्बन्धः। अन्यथेति सर्वस्यैव शक्तिकर्तृके सद्गुरुप्रापणे। न वक्तव्यमिति यियासुत्वम्। यदि नाम हि सर्वोऽपि प्रातिभज्ञानभागाचार्यः सद्गुरुं प्रति अविशेषेण शक्त्या नीयते तद्यियासुशब्दस्य प्रयोगं विना

'रुद्रशक्तिसमाविष्टः स शिवेच्छया ।
भुक्तिमुक्तिप्रसिद्ध्यर्थं नीयते सद्गुरुं प्रति ॥'

इत्येतावदभिधानीयम् ॥

तदाह

**रुद्रशक्तिसमाविष्टो नीयते सद्गुरुं प्रति ॥२४९॥**

एवं हि प्रातिभस्याचार्यस्य सभित्तिनिर्भित्त्यादिभेदभिन्नत्वं न भवेदिति भावः ॥ २४९ ॥

तस्मात्प्रातिभज्ञानवत्त्वेऽपि संवाददार्ढ्यमनुपेक्षमाण एव यियासुर्भवति, नान्य इत्याह

**तेन प्राप्तविवेकोत्थज्ञानसंपूर्णमानसः ।**
**दार्ढ्यसंवादरूढ्यादेर्यियासुर्भवति स्फुटम् ॥२५०॥**

नचैतन्निर्मूलं व्याख्यानमित्याह

**उक्तं नन्दिशिखातन्त्रे प्राच्यषट्के महेशिना ।**
**अभिलाषः शिवे देवे पशूनां भवते तदा ॥२५१॥**

**यदा शैवाभिमानेन युक्ता वै परमाणवः ।**
**तदैव ते विमुक्तास्तु दीक्षिता गुरुणा यतः ॥२५२॥**

**प्राप्तिमात्राच्च ते सिद्धसाध्या इति हि गम्यते ।**

यद्यपि यदैव परमा अत्यन्तं बद्धा अणवः प्रातिभज्ञानात्मना शैवेनाभिमानेन युक्तास्तदैव विमुक्ताः, तथापि तदा तेषां प्रागवस्थापेक्षया पशूनां संवाददार्ढ्याय शिवे

'शिव आचार्यरूपेण लोकानुग्रहकारक ।'

इत्याद्युक्त्या 'गुरावभिलाषो यियासा भवति, यतो गुरुणा दीक्षिताः कृतसंस्कारा भवन्तीत्यर्थः । ततश्च

'यस्त्वकल्पितरूपोऽपि संवाददृढताकृते ।
अन्यतो लब्धसंस्कारः स साक्षाद्भैरवो गुरुः ॥' (तंत्रालो० ४।७७)

इत्याद्युक्त्या गुर्वादेरन्यतः संस्कारस्य दृढताकृते प्राप्तिमात्रादेव ते सिद्धसाध्या निकृत्तभवबन्धना भवन्ति इति गम्यते तात्पर्येणाववुध्यत इत्यर्थः । यदुक्तं तत्र सार्धश्लोकानन्तरं

'समाघ्राय यदा शक्त्या गुरुमूर्तिं तदा विभुः ।
आविश्य दीक्षयाणूनां स्वशक्त्या शक्तिमान्पतिः ॥
कृन्तते बन्धजालं तु कृत्यन्ते बन्धसंचयाः ।
तेन बन्धनिकृन्ती सा कथिता तु शिवाध्वरे ॥'

इति ॥

नन्वेवं यियासुरित्यादिग्रन्थश्चेन्मध्यतीव्रस्य शक्तिपातस्य विषयस्तन्मन्दकः स्यादित्याशङ्क्याह

**तमाराध्येति तु ग्रन्थो मन्दतीव्रैकगोचरः ॥२५३॥**

तीव्रतीव्रविषयस्तु ग्रन्थः प्राग्वदेवेत्यर्थसिद्धम् ॥

तदेवोपसंहरति

**नवधा शक्तिपातोऽयं शंभुनाथेन वर्णितः ।**

अमुमेवार्थं तात्पर्यगत्या निरूपयति

**इदं सारमिह ज्ञेयं परिपूर्णचिदात्मनः ॥२५४॥**
**प्रकाशः परमः शक्तिपातोऽवच्छेदवर्जितः ।**
**तथाविधोऽपि भोगांशावच्छेदेनोपलक्षितः ॥२५५॥**
**अपरः शक्तिपातोऽसौ पर्यन्ते शिवताप्रदः ।**

इदम् इहास्मिन् नवविधेऽपि शक्तिपाते सारं ज्ञेयं यत्परिमितेऽप्यात्मनि परिपूर्णचिदात्मतया यः परमः प्रकाशः, स परमः शक्तिपात उच्यते यतोऽवच्छेदवर्जितस्तत्तदुपाधिविगलनादनवच्छिन्नसंविदेकस्वभाव इत्यर्थः । असौ पुनरपरः शक्तिपातो, यः परिपूर्णचिदात्मतया प्रकाशमानत्वेऽपि भोगांशावच्छिन्नः । अत एवोक्तं पर्यन्ते शिवताप्रद इति ॥

नन्वेवंविधस्यास्य शक्तिपातस्य को हेतुः, किं कर्म किमुतान्यत्किंचिदित्याशङ्क्याह

**उभयत्रापि कर्मादेर्मायान्तर्वर्तिनो यतः ॥२५६॥**

**नास्ति व्यापार इत्येवं निरपेक्षः स सर्वतः ।**

नास्ति व्यापार इति नैतत्कृतः शक्तिपात इत्यर्थः । अत्र विशेषणद्वारेण हेतुर्मायान्तर्वर्तिन इति । यदेव हि कर्मादि अणोर्मायान्तर्वर्तितायां निमित्तं, तत्कथं तदुत्तीर्णतायां निमित्ततां यायादित्याशयः । यथोक्तं प्राक्

'तत्रास्य नाणुगे तावदपेक्ष्ये मलकर्मणी ।
अणुस्वरूपताहानौ तद्गतं हेतुतां कथम् ॥
व्रजेन्मायानपेक्षत्वमत एवोपपादयेत् ।' ( ११५ )

इति । अनेन च शक्तिपातविचित्रतानन्तर्येणानुजोद्देशोद्दिष्टमायानिरपेक्षत्वसिद्धेरवकाशो दत्तः ॥

अतश्च शुद्धात्मनां कर्मादिनैरपेक्ष्येणैव भैरवीभावो भवेदित्याह

**तेन मायान्तराले ये रुद्रा ये च तदूर्ध्वतः ॥२५७॥**

**स्वाधिकारक्षये तैस्तैर्भैरवीभूयते हठात् ।**
**ये मायया ह्यनाक्रान्तास्ते कर्माद्यनपेक्षिणः ॥२५८॥**

**शक्तिपातवशादेव तां तां सिद्धिमुपाश्रिताः ।**

हठादिति कर्मादिनिरपेक्षपरमेश्वरशक्तिपातबलादित्यर्थः । ननु मायोर्ध्वे कर्मादिरसंभवादस्तु नाम तन्नैरपेक्ष्यं, मायान्तस्तु तत्संभवात्कथमेतत्संगच्छताम् । तथात्वे वा कस्मात्तत्तत्सिद्ध्युदय इत्याशङ्क्याह ये माययेत्यादि । तां तां सिद्धिं भुक्तिमुक्तिलक्षणाम् ॥

नन्वेते पूजाजपादिकर्मणैव तां तां सिद्धिमुपाश्रिता इति कथंकारमुक्तकर्माद्यनपेक्षिण इत्याह

**ननु पूजाजपध्यानशंकरासेवनादिभिः ॥२५९॥**

**ते मन्त्रादित्वमापन्नाः कथं कर्मानपेक्षिणः ।**

एतदेव परिहरति

**मैवं तथाविधोत्तीर्णशिवध्यानजपादिषु ॥२६०॥**
**प्रवृत्तिरेव प्रथममेषां कस्माद्विविच्यताम् ।**

इह तावदिदमेव चिन्त्यतां—यदेषां शुद्धात्मनां प्रथममेव तथाविधान्मायान्तश्चारिणः कर्मादेरुत्तीर्णस्तदपरामृष्टो योऽयं शिवस्तद्विषयेषु ध्यानजपादिषु कस्मात्प्रवृत्तिः किं तत्र निमित्तमित्यर्थः ॥

ननूक्तमेवात्र कर्मतत्साम्यादि निमित्तमित्याशङ्कयाह

**कर्मतत्साम्यवैराग्यमलपाकादि दूषितम् ॥२६१॥**
**ईश्वरेच्छा निमित्तं चेच्छक्तिपातैकहेतुता ।**

दूषितमिति समनन्तरमेव । ईश्वरेच्छा चेन्निमित्तं, तर्ह्यस्मत्पक्षमेवागतोऽसि यच्छुद्धात्मनां तत्र तत्र कर्मादिनिरपेक्षः पारमेश्वरः शक्तिपात एवैको हेतुरिति ॥

नचैवं जपादेः कर्मता न्याय्येत्याह

**जपादिका क्रियाशक्तिरेवेत्थं ननु कर्म तत् ॥२६२॥**
**कर्म तल्लोकरूढं हि यद्भोगमवरं ददत् ।**
**तिरोधत्ते भोक्तृरूपं संज्ञायां तु न नो भरः ॥२६३॥**

इत्थं शक्तिपातैकहेतुकत्वे जपादिलक्षणा क्रिया पारमेश्वरी स्वरूपविकासिका क्रियाशक्तिरेव, ननु तत्कर्म । तद्धि कर्म लोके रूढं, यदवरं परिमितं भोगं ददद्भोक्तुः पूर्णं रूपं, तिरोधत्ते तथातथासंकोचनादावृणुयादित्यर्थः । अथ जपाद्यपि लोके कर्मतया प्रसिद्धमित्युच्यते, तत्को नाम नाम्नि विवादं विद्वान्विदध्यादित्याह संज्ञायां तु न नो भर इति ॥ २६३ ॥

ननु यद्येते मायया कर्मणा वाप्यनाक्रान्तास्तदेषां पूर्णत्वात् तस्यां तस्यां सिद्धावभिलाष एव कथं भवेदित्याशङ्कां प्रदर्श्य प्रतिक्षिपति

**तेषां भोगोत्कता कस्मादिति चेद्दत्तमुत्तरम् ।**
**चित्राप्रकाशोऽयं स्वतन्त्रः परमेश्वरः ॥२६४॥**
**स्वातन्त्र्यात्तु तिरोभावबन्धो भोगेऽस्य भोक्तृताम् ।**
**पुष्णन्स्वं रूपमेव स्यान्मलकर्मादिवर्जितम् ॥२६५॥**

दत्तमित्ति प्राक्स्वमतप्रदर्शनोपक्रमे। तदेव संक्षेपेण व्यनक्ति चित्रेत्यादिना। अयं तावदेक एव चिद्रूपः परमेश्वरः स्वस्वातन्त्र्याच्चित्रेण तत्तत्प्रमातृप्रमेयाद्यात्मकेनानेकेनाकारेण प्रकाशत इति स्थितम्। तत्तस्मादेकत्वेऽप्यानैक्यावभासनाद्धेतोरस्य स्वस्वातन्त्र्यमाहात्म्यात्तिरोभावः स्वरूपगोपना तदात्माबन्धो भोगे भोक्तृतां पुष्णन्संकोचाभासनपुरःसरं जात्यायुर्भोगप्रदत्वेन विकल्पितात्मभिः स्वयंकल्पितैः कर्मभिरात्मानं बध्नन्, पुनरपि उद्वेष्टनक्रमेणागन्तुकमलकर्मादिरूपतातिरस्कारेण स्वं परिशुद्धं रूपमेव स्यात् पूर्णदृक्क्रियात्मा स्वतन्त्रः परमेश्वर एवावशिष्येतेत्यर्थः। यदुक्तं प्राक्

'देवः स्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः।
रूपप्रच्छादनक्रीडायोगादणुरनेककः ॥
स स्वयंकल्पिताकारविकल्पात्मककर्मभिः।
बध्नात्यात्मानमेवेह स्वातन्त्र्यादिति वर्णितम् ॥
स्वातन्त्र्यमहिमैवायं देवस्य यदसौ पुनः।
स्वं रूपं परिशुद्धं सत्स्पृशत्यप्यणुतामयः ॥' (१३।१०५)

इति ॥ २६५ ॥

ननु

'शक्तयोऽस्य जगत्कृत्स्नं........................ ।'

इत्याद्युक्त्या पारमेश्वरशक्तिस्फारसारमेव सर्वमिदं विश्वं, तद्भूतभाववल्लौकिकं शुभाशुभं कर्मापि तथेति कथं जपादिका क्रियैव तच्छक्तिरित्युक्तं न तु कर्मापि,—इत्याशङ्क्य गर्भीकृत्य, शक्तिरूपत्वाविशेषेऽप्येषां विशेषोऽस्तीति संवादपुरःसरं विभजति

**उक्तं सेयं क्रियाशक्तिः शिवस्य पशुवर्तिनी।**
**बन्धयित्रीति तत्कर्म कथ्यते रूपलोपकृत् ॥२६६॥**
**ज्ञाता सा च क्रियाशक्तिः सद्यःसिद्ध्युपपादिका।**

सेयं पारमेश्वरी क्रियाशक्तिरिदमहं करोमि इत्यादिभेदावग्रहशालिनि पशौ वर्तमाना हानादानादिक्षोभमयत्वात् बन्धमेवाधत्त इति तत् स्वरूपलोपकारित्वात् सुखदुःखादिप्रदं कर्म उच्यते, येनोक्तं

'कर्म तल्लोकरूढं हि यद्भोगमवरं ददत्।
तिरोधत्ते भोक्तृरूपं.......................... ॥'

इति । सैव पुनः 'संविदेवेदं सर्वम्' इति शिवशक्त्यात्मकं स्वं मार्गमधितिष्ठन्ती ज्ञाता सद्य एवं तां तां सिद्धिमुपपादयेत् येनोक्तं जपादिका क्रिया पारमेश्वरी शक्तिर्न तु कर्मेति । तदुक्तं श्रीस्पन्दे

'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्धयुपपादिका ॥' (४।१८)

इति ॥

ननु का नामात्र सिद्धिर्विवक्षितेत्याशङ्क्याह

**अविच्छिन्नस्वात्मसंवित्प्रथा सिद्धिरिहोच्यते ॥२६७॥**
**सा भोगमोक्षस्वातन्त्र्यमहालक्ष्मीरिहाक्षया ।**

सा चेह सत्यपि देहे भवेदित्युक्तमक्षया भोगमोक्षमहालक्ष्मीरिति ॥

ननु विष्णवादिप्रसादोपनतापि सा सा सिद्धिर्भवन्ती लोके दृश्यत एव, तच्छिवशक्तिपातादेवैवं भवेदिति कस्मादुक्तमित्याशङ्क्याह

**विष्णवादिरूपता देवे या काचित्सा निजात्मना ॥२६८॥**
**भेदयोगवशान्मायापदमध्यवस्थिता ।**
**तेन तद्रूपतायोगाच्छक्तिपातः स्थितोऽपि सन् ॥२६९॥**
**तावन्तं भोगमाधत्ते पर्यन्ते शिवतां न तु ।**

इह या ना नाम काचन परमेश्वरे विष्णवादिरूपता, सा स्वयमुल्लासिताद्भेदयोगवशान्मायापदमध्यमध्यास्त इति विष्णवादिरूपतामवलम्ब्य स्थितोऽपि सन् शक्तिपातस्तावन्तं तदधिकारोचितमेव भोगमादध्यात्, न तु अन्ते शिवतामपि, येनास्य पारमेश्वराच्छक्तिपातादवरत्वम् ॥

ननु मायाध्वमध्यवर्तिनो विष्णुविरिञ्चादेः कथङ्कारमवरे भोगादिमयेऽप्यनुग्रहे सामर्थ्यमित्याशङ्कां दृष्टान्तप्रदर्शनेन शिथिलयति

**यथा स्वातन्त्र्यतो राजाप्यनुगृह्णाति कंचन ॥२७०॥**
**ईशशक्तिसमावेशात्तथा विष्णवादयोऽप्यलम् ।**

इह यथा

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वभ्रं वा स्वर्गमेव वा ॥'

इत्यादिदृशा ईश्वरप्रेरणया मायान्तश्चार्यपि राजादिः स्वेच्छया कंचन स्वसंविभागेनानुगृह्णाति, तथा विष्णवादयोऽपि भोगाधानेन कंचनानुग्रहीतुमलं समर्था इत्यर्थः ॥

ततश्च किमित्याशङ्क्याह

**मायागर्भाधिकारीयेशक्तिपातवशात्ततः ॥२७१॥**

**कोऽपि प्रधानपुरुषविवेकी प्रकृतेर्गतः ।**

**उत्कृष्टात्तत एवाशु कोऽपि बुद्ध्वा विवेकिताम् ॥२७२॥**

**क्षणात्पुंसः कलायाश्च पुंमायान्तरवेदकः ।**

ततस्तेषामेवंसामर्थ्यादेव मायागर्भाधिवासमधिकृत्य, प्रवृत्तात्तदीयान्मन्दाच्छक्तिपातात्कोऽपि कापिलादिः प्रकृतिपुरुषयोर्विवेकं जानानः प्रकृतेर्गतः प्राकृताद्बन्धान्मुक्तः कोऽपि च तत एव मायागर्भाधिकारीयात् तीव्राच्छक्तिपातादाशु पुंसः कलायाश्च विवेकं ज्ञात्वा क्षणादेव पुंमायान्तरवेदको मायातः समुत्तीर्ण इत्यर्थः ॥

नन्वेवमप्यस्य कोऽर्थं इत्याशङ्क्याह

**कलाश्रयस्याप्यत्यन्तं कर्मणो विनिवर्तनात् ॥२७३॥**

**ज्ञानाकलः प्राक्तनस्तु कर्मी तस्याश्रयस्थितेः ।**

तदुक्तं प्राक्

'तदा मायापुंविवेकः सर्वकर्मक्षयाद्भवेत् ।
विज्ञानाकलता मायाधस्तान्नो यात्यतः पुमान् ॥' ( ९।१८५ )

इति । नन्वेवं प्रकृतिपुरुषविवेकिनोऽपि किमत्यन्तं कर्म निवर्तते नवेत्याशङ्क्याह प्राक्तनस्त्वित्यादि । आश्रयः कलादिः ॥

नन्वेवं तर्हि अस्मद्वद्बद्ध एवासाविति किं प्रकृतिपुरुषज्ञानेनेत्याशङ्क्याह

**स परं प्रकृतेर्बुध्ने सृष्टिं नायाति जातुचित् ॥२७४॥**

**मायाधरे तु सृज्येतानन्तेशेन प्रचोदनात् ।**

सृज्येतेति त्रिमलबद्धत्वात् । तदुक्तं प्राक्

'धीपुंविवेके विज्ञाते प्रधानपुरुषान्तरे ।
अपि न क्षीणकर्मा स्यात्कलायां तद्धि संभवेत् ॥
अतः सांख्यदृशा सिद्धः प्रधानाधो न संसरेत् । ( ९।१८७ )

इति ॥

ननु भवतु नामैतत्, मायापुंविवेकज्ञस्य तु ज्ञानाकलतैव किं भवेदुत तोऽपि विशेष इत्याशङ्क्याह

**विज्ञानाकलतां प्राप्तः केवलादधिकारतः ॥२७५॥**
**मलान्मन्त्रतदीशादिभावमेति सदा शिवात् ।**

अधिकारत इति अधिकारमात्रावशेषादित्यर्थः । सदेति कदाचिदपि अन्यथा न भवेदिति भावः । शिवादिति नत्वनन्तेशचोदनया । यदुक्तं प्राक्

'स पुनः शांभवेच्छातः शिवाभेदं परामृशम् ।
क्रमान्मन्त्रेशतन्नेतृरूपो याति शिवात्मताम् ॥' ( ९।९३ )

इति ॥

ननु भवत्वेवं, पारमेश्वराच्छक्तिपातात्पुनः किं स्यादित्याशङ्क्याह

**पत्युः परस्माद्यस्त्वेष शक्तिपातः स वै मलात् ॥२७६॥**
**अज्ञानाख्याद्वियोक्तेति शिवभावप्रकाशकः ।**

यः पुनरयं परस्मात् नत्वपरस्माद्विष्ण्वादेः पत्युः सकाशाच्छक्तेः पातः, स एव शिवभावावभासनेन मोक्षप्रदो यस्मादज्ञानाख्यात् न तु द्रव्यरूपान्मलाद्वियोक्ता वियोजक इत्यर्थः । यदुक्तं प्राक्

'मलाद्विविक्तमात्मानं पश्यंस्तु शिवतां व्रजेत् ।' ( ९।१८८ )

इति ॥

ननु स एवैवं कस्मादित्याशङ्क्याह

**नान्येन शिवभावो हि केनचित्संप्रकाशते ॥२७७॥**

अन्येनेति विष्ण्वादिसंबन्धिना, ते ह्यत्र भ्रान्ता एवेत्यभिप्रायः ॥ २७७ ॥

अत एवाह

**स्वच्छन्दशास्त्रे तेनोक्तं वादिनां तु शतत्रयम् ।**
**त्रिषष्टयभ्यधिकं भ्रान्तं वैष्णवाद्यं निशान्तरे ॥२७८॥**

**शिवज्ञानं केवलं च शिवतापत्तिदायकम् ।**

चोऽवधारणे, तेन केवलं शिवज्ञानमेव शिवतावत्तिदायकमित्यर्थः । एतच्च संवादितं प्राग्बहुशः ॥

एवं च यदेव पारमेश्वर्याः शक्तेरधिष्ठानं शिवतापत्तिं दद्यात्, तदेव शक्तिपातशब्दव्यपदेश्यं न त्वेवमेव, न ह्येवंविधं किंचिज्जगत्यस्मिन्समस्ति यत्पारमेश्वर्या शक्त्या नाधिष्ठितम् । तदाह

**शिवतापत्तिपर्यन्तः शक्तिपातश्च चर्च्यते ॥२७९॥**
**अन्यथा किं हि तत्स्याद्यच्छैव्या शक्त्यानधिष्ठितम् ।**

अत एवोक्तयुक्त्या तांस्तानप्यधितिष्ठन्ती विष्णवादिशक्तिर्न मोक्षप्रदेति नेहास्याः शक्तिपाततया परिगणनम् । तदुक्तमनेनैवान्यत्र

'वैष्णवादोनां तु राजानुग्रहवन्न मोक्षान्ततेति नेह तद्विवेचनं,
शिव शक्त्यधिष्ठानं तु सर्वत्रेत्युक्तम् । सा परं ज्येष्ठा
न भवति अपि तु घोरा घोरतरा वा ॥' ( तं० सा० ११ आ० )

इति ॥

अतश्च

'विषयेष्वेव संलोनानधोऽधः पातयन्त्यणून् ।
रुद्राणून्याः समालिङ्ग्य घोरतर्योऽपराः स्मृताः ॥'

इत्याद्युक्तशक्त्यधिष्ठितानां भेदावष्टम्भभाजां वैष्णवादीनामस्मिन्संविदद्वैतात्मनि शिवज्ञानेऽधिकारो नास्तीत्याह

**तेनेह वैष्णवादीनां नाधिकारः कथंचन ॥२८०॥**
**ते हि भेदैकवृत्तित्वादभेदे दूरवर्जिताः ।**

नन्वेषामपि कदाचिदनुग्राहिका शैवी शक्तिश्चेत्संबध्यते, तदा किं कर्तव्यमित्याशङ्क्याह

**स्वातन्त्र्यात्तु महेशस्य तेऽपि चेच्छिवतोन्मुखाः ॥२८१॥**
**द्विगुणा संस्क्रियास्त्येषां लिङ्गोद्धृत्याथ दीक्षया ।**

लिङ्गोद्धृत्येत्युपवासादिक्रमेण वक्ष्यमाण रूपया ॥ २८१ ॥

ननु पारमेश्वर्या शक्त्या चेदयमधिष्ठितस्तदन्यवदेक एवास्य दीक्षादिः संस्कारोऽस्तु, द्विगुणेनानेन कोऽर्थं इत्याशङ्क्यां दृष्टान्तप्रदर्शनेन प्रशमयति

**दुष्टाधिवासविगमे पुष्पैः कुम्भोऽधिवास्यते ।।२८२।।**
**द्विगुणोऽस्य स संस्कारो नेत्थं शुद्धे घटे विधिः ।**

एतदेवोपसंहरति

**इत्थं श्रीशक्तिपातोऽयं निरपेक्ष इहोदितः ।।२८३।।**

नन्वेवमागमानन्तरविरोधो भवेद्यत्र तु कर्मसाम्यादिसापेक्षत्वमस्योक्तं यन्मतङ्गे

'समत्वधर्मव्यापारः कष्टोऽयं स्यात्सुदुष्करः ।

इति, किरणेऽपि

'समे कर्मणि संजाते तत्कालं योग्यतावशात् ।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ।।
सर्वज्ञः स शिवो यद्वत्किंचिज्ज्ञत्वविवर्जितः ।

इति, तत्किमेतदुक्तमित्याशङ्क्याह

**अनयैव दिशा नेयं मतङ्गकिरणादिकम् ।**
**ग्रन्थगौरवभीत्या तु तल्लिखित्वा न योजितम् ।।२८४।।**

नेयमिति पूर्वपक्षयोजनादिक्रमेण व्याख्येयमित्यर्थः ।।

न केवलमेतदस्मदागम एवोक्तं, यावच्छ्रुत्यर्थोपजीविनि पुराणादावपीत्याह

**पुराणेऽपि च तस्यैव प्रसादाद्भक्तिरिष्यते ।**
**यया यान्ति परां सिद्धिं तद्भावगतमानसाः ।।२८५।।**

'तस्यैव तु प्रसादेन भक्तिरुत्पद्यते नृणाम् ।'

इत्यस्य प्रथममर्धम् ।। २८५ ।।

एतदेव व्याचष्टे

**एवकारेण कर्मादिसापेक्षत्वं निषिध्यते ।**
**प्रसादो निर्मलीभावस्तेन संपूर्णरूपता ।।२८६।।**

**आत्मना तेन हि शिवः स्वयं पूर्णः प्रकाशते ।**

इह तावदीश्वरः स्वस्वातन्त्र्यात् संकोचावभासनेनाणुतां परिगृह्णन् प्रत्यावृत्य निर्मलं पूर्णमपि रूपमादर्शयति, इत्युक्तम्, तत्तस्य प्रसादः प्रसन्नत्वं मलापगमः, तेन च निर्मलीभावेन संपूर्णरूपता यतः स्वयमेव शिवः परमेश्वरः तेनात्मना तत्तत्संकुचितात्मावच्छेदं परिगृह्यापि पूर्णः प्रकाशते प्रत्यावृत्तपूर्णदृक्क्रियास्वभावो भवेत् । यदुक्तं 'परां सिद्धिं यान्ति' इति ॥ २८६ ॥

एतदेव व्यतिरेकद्वारेण निदर्शयति

**शिवीभावमहासिद्धिस्पर्शवन्ध्ये तु कुत्रचित् ॥२८७॥**

**वैष्णवादौ हि या भक्तिर्नासौ केवलतः शिवात् ।**

या पुनः कस्मिंश्चिदेवमुक्तयुक्त्या शिवीभावापत्तिविरहिणि वैष्णवादौ भक्तिः, नासौ केवलतः शिवात् कर्माद्यनपेक्षिणः परमेश्वरान्न भवेदित्यर्थः ॥ २८७ ॥

ननु समनन्तरमेवेदमुक्तं यच्छैव्या शक्त्यानधिष्ठितं न किंचिदपि स्यादिति, तदिदानीं वैष्णवादौ भक्तिः शिवान्नेति कथमिवाभिधीयते इत्याशङ्क्याह

**शिवो भवति तत्रैष कारणं न तु केवलः ॥२८८॥**

**निर्मलश्चापि तु प्राप्तावच्छित्कर्माद्यपेक्षकः ।**

तत्रेति विष्णवादिविषयायां भक्तौ केवलत्वं निर्मलत्वं च व्यतिरेचयितुमपित्वित्याद्युक्तम् । प्राप्तावच्छिदिति विष्णवादिरूपोपग्रहावच्छिन्नतया परिगृहीतसंकोचकलङ्क इत्यर्थः ॥ २८८ ॥

ननु कस्यायमर्थ इत्याशङ्क्याह

**यया यान्ति परां सिद्धिमित्यस्येदं तु जीवितम् ॥२८९॥**

नहि तदेकरूपत्वाभावे भक्तेरुक्तरूपा परा सिद्धिर्भवेदिति भावः ॥ २८९ ॥

एतच्च न्यायागमकोविदैर्गुरुभिरप्यनुमतमित्याह

**श्रीमानुत्पलदेवश्चाप्यस्माकं परमो गुरुः ।**
**शक्तिपातसमये विचारणं प्राप्तमीश न करोषि कर्हिचित् ।२९०।**

**अद्य मां प्रति किमागतं यतः स्वप्रकाशनविधौ विलम्बसे ।**
**कर्हिचित्प्राप्तशब्दाभ्यामनपेक्षित्वमूचिवान् ।२९१।**

**दुर्लभत्वमरागित्वं शक्तिपातविधौ विभोः ।**

श्रीमानुत्पलदेवश्चापि विभोः शक्तिपातविधावनपेक्षित्वाद्यूचिवानिति सम्बन्धः । यत्तत्र योग्यायोग्यत्वलक्षणं विचारणं प्राप्तं न्यायोपनतमपि कर्हिचित्कादाचिदपि विस्मृत्यापि न करोषि यतः कर्मादिनिरपेक्षतया स्वेच्छामात्रमेवात्र भवतो निबन्धनम् । अत एवात्र दुर्लभत्वमपि । तद्धि लोके सुलभमुच्यते, यत्कचिदुपायमपेक्ष्य भवति येन तत्संभरणेन नूनं तल्लाभो भवेत् । अत एवात्रारागित्वमपि । विष्ण्वादयो हि कृतमेव जनमनुगृह्णन्ति नाकृतमिति रागद्वेषविवशा इव लक्ष्यन्ते, भवान् पुनः सर्वनिरपेक्षमेवैतत्कुरुत इति । अत एव निरपेक्षस्वतन्त्रशक्तिपातक्रमानुरूपमीशेत्यामन्त्रणम् ॥

न केवलं कर्हिचित्प्राप्तशब्दाभ्यामेवैतदूचिवान्, यावदपरार्धेनापीत्याह

**अपरार्धेन तस्यैव शक्तिपातस्य चित्रताम् ।।२९२।।**

**व्यवधानचिरक्षिप्रभेदाद्यैरुपवर्णितैः ।**

उपवर्णितैरिति समनन्तरमेव, यतोऽत्र मां प्रति कस्माद्विलम्बसे व्यवधानादिना कालं क्षिपसि क्षिप्रमेव स्वप्रकाशं कुर्विति तात्पर्यम् ॥

न केवलमेतत्संविदद्वैतनिष्ठैरेव गुरुभिरुक्तं यावच्छैवशास्त्रव्याख्यातृभिरपीत्याह

**श्रीमताप्यनिरुद्धेन शक्तिमुन्मीलिनीं विभोः ।।२९३।।**

**व्याचक्षाणेन मातङ्गे वर्णिता निरपेक्षता ।**
**स्थावरान्तेऽपि देवस्य स्वरूपोन्मीलनात्मिका ।।२९४।।**

**शक्तिः पतन्ती सापेक्षा न क्वापीति सुविस्तरात् ।**

श्रीमतानिरुद्धेनापि सुविस्तरान्निरपेक्षता वर्णितेति संबन्धः । शक्तिमुन्मीलिनीमिति । यदुक्तं तत्र

'यदास्योन्मीलिनी शक्तिः शिवरागेण रञ्जिता ।
निपतत्यतितेजस्का नित्यानुग्रहशालिनी ।।' (१।४।४५)

इति । स्थावरान्ते इत्यनेनात्यन्तमयोग्यानामपि स्वरूपमुन्मीलयतीति सूचितम् ॥

इहेदानीं शक्तिपातवैचित्र्यमूलमधिकारवैचित्र्यमप्यभिधातुमुपक्रमते

**एवं विचित्रेऽप्येतस्मिञ्छक्तिपाते स्थिते सति ।।२९५।।**
**तारतम्यादिभिर्भेदैः समय्यादिविचित्रता ।**

तदेवाह

**कश्चिद्रुद्रांशतामात्रापादनात्तत्प्रसादतः ।।२९६।।**
**शिवत्वं क्रमशो गच्छेत् समयी यो निरूप्यते ।**
**कश्चिच्छुद्धाध्वबन्धः सन् पुत्रकः शीघ्रमक्रमात् ।।२९७।।**
**भोगव्यवधिना कोऽपि साधकश्चिरशीघ्रतः ।**
**कश्चित्संपूर्णकर्तव्यः कृत्यपञ्चकभागिनी ।।२९८।।**
**रूपे स्थितो गुरुः सोऽपि भोगमोक्षादिभेदभाक् ।**
**समय्यादिचतुष्कस्य समासव्यासयोगतः ।।२९९।।**
**क्रमाक्रमादिभिर्भेदैः शक्तिपातस्य चित्रता ।**

क्रमशः इति पुत्रकदीक्षानन्तरमत एवात्र मन्दः शक्तिपातः । शीघ्रमिति देहपातसानन्तर्येण । अक्रमादिति सत्यपि देह इत्यर्थः । भोगव्यवधिश्च चिरं शीघ्रं वा भवेदित्युक्तं चिरशीघ्रत इति । भोगमोक्षादिभेदभागित्यर्थाच्छिष्यं प्रति, स्वयं हि तस्य सम्पूर्णकर्तव्यत्वमुक्तम् । तारतम्यादेव च तयोरपि तारतम्यमिति भेदशब्देनोक्तम् । समासव्यासयोगात इति क्रमाक्रमादिभिरति च, तत्र क्रमादादौ समयी ततः पुत्रकः, तत आचार्य इति सामस्त्यम्,

अक्रमात्कश्चित्पुत्रक एव, नत्वादौ समय्यपि, कश्चिदाचार्य एव, नत्वादौ समयी पुत्रको वेति व्यस्तत्वम् ॥

न केवलमेव शक्तिपातस्य क्रमाक्रमाभ्यां वैचित्र्यं, यावत्प्रकारान्तरेणापीत्याह

**क्रमिकः शक्तिपातश्च सिद्धान्ते वामके ततः ॥३००॥**
**दक्षे मते कुले कौले षडर्थे हृदये ततः ।**
**उल्लंघनवशाद्वापि झटित्यक्रममेव वा ॥३०१॥**

त्रिकार्थस्यैव परमुत्कृष्टत्वात् । षडर्धे हृदये इति सामानाधिकरण्येन योज्यम् । तदुक्तं

'वेदाच्छैवं ततो वामं ततो दक्षं ततो मतम् ।
ततः कुलं ततः कौलं त्रिकं सर्वोत्तमं परम् ॥'

इति अतश्च सिद्धान्तात्प्रभृति षडर्धपर्यन्तं यथायथं तारतम्याच्छक्तिपातस्यापि तथाभावो भवेदिति भावः । उल्लङ्घनवशादिति सिद्धान्तानन्तरं दक्षे, ततः कुले, ततः षडर्धे चेति । झटित्यक्रममेवेति त्रिकार्थं एवेति ॥३०१॥

नचैतन्निर्मूलमेवोक्तमित्याह

**उक्तं श्रीभैरवकुले पञ्चदीक्षासुसंस्कृतः ।**
**गुरुरुल्लंघिताधःस्थस्रोता वै त्रिकशास्त्रगः ॥३०२॥**

इह

'होत्री दीक्षा तु सिद्धान्ते तन्त्रे योजनिका स्मृता ।
त्रिके समावेशवती कुले स्तोभात्मिका मता ॥
सामरस्यमयी कौले दीक्षा पञ्चविधोदिता ।'

इत्याद्युक्त्या पञ्चविधया दीक्षया सुष्ठु संस्कृतोऽपि त्रिकशास्त्रग एव गुरुल्लङ्घिताधरदशाधिशायिशैवादिशास्त्रप्रवाहः सर्वमूर्धाभिषिक्त इत्यर्थः । यदुक्तं

'वाममार्गाभिषिक्तोऽपि दैशिकः पारतत्त्ववित् ।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ॥'

इति ॥ ३०२ ॥

ननु इह सर्वशास्त्राणां

'यतः शिवोद्भवाः सर्वे शिवधामफलप्रदाः ।

इत्याद्युक्त्या हेतुतः फलतो वा न कश्चिद्विशेषः, तत्कथमिदमुत्तरमिदं चाधरशास्त्रमित्युक्तमित्याशङ्क्याह

**ज्ञानाचारादिभेदेन ह्युत्तराधस्तां विभुः ।**
**शास्त्रेष्वदीदृशच्छीमत्सर्वाचारहृदादिषु ॥३०३॥**

ज्ञानं द्वयाद्वयरूप, क्रिया बाह्या आन्तरी वा । तन्निमित्तमेव चात्राधरौत्तर्यमित्युपपादितं बहुशः ॥ ३०३ ॥

तदेव पठति

**वाममार्गाभिषिक्तस्तु दैशिकः परतत्त्ववित् ।**
**तथापि भैरवे तन्त्रे पुनः संस्कारमर्हति ॥३०४॥**

ननु यदि नाम शैवादावयमभिषिक्तस्तावतैव च परं तत्त्वं वेत्ति, तदस्य भैरवतन्त्रादौ पुनः संस्कारेण कोऽर्थः इत्याशङ्क्याह

**शैववैमलसिद्धान्ता आर्हताः कारुकाश्च ये ।**
**सर्वे ते पशवो ज्ञेया भैरवे मातृमण्डले ॥३०५॥**

मातृमण्डलकुलकौलादौ च भैरवतन्त्रादिसंस्कृता अपि पशव एवेत्यर्थंसिद्धम् ॥ ३०५ ॥

आदिशब्दाक्षिप्ते कुलकौलादावप्येतदुक्तमित्याह

**कुलकालोविधौ चोक्तं वैष्णवानां विशेषतः ।**
**भस्मनिष्ठाप्रपन्नानामित्यादौ नैव योग्यता ॥३०६॥**

भस्मनिष्ठाप्रपन्नानामिति शैवादीनाम् ॥ ३०६ ॥

न केवलमेतदत्रैवोक्तं, यावदन्यत्रापीत्याह

**स्वच्छन्दशास्त्रे संक्षेपा दुक्तं च श्रीमहेशिना ।**

तदेव पठति

**अन्यशास्त्ररतो यस्तु नासो सिद्धिफलप्रदः ॥३०७॥**

एतदेवोपपादयति

**समय्यादिक्रमाल्लब्धाभिषेको हि गुरुर्मतः ।**
**स च शक्तिवशादित्थं वैष्णवादिषु कोऽन्वयः ॥३०८॥**

इत्थमिति काकाक्षिवत्, तेन पारमेश्वराच्छक्तिपातादित्थं समय्यादिक्रमेण लब्धाभिषेक इत्यर्थः । इत्थमुक्तेन प्रकारेणान्यशास्त्ररतेषु वैष्णवादिषु इह गुरुत्वे को नामान्वयो न कश्चिदभिसम्बन्धः, नहि तेषामुक्त्या पारमेश्वरशक्तिपात एवास्ति,—इति का कथा समय्यादिक्रमेण शास्त्रश्रवणाभिषेकादावित्याशयः ॥

ननु किं नामायमत्र दाम्भिकतया कृत्रिमभक्त्यादिप्रदर्शनादासादितैवंरूपो गुरुः स्यादित्याशङ्क्याह

**छद्मापश्रवणाद्यैस्तु तज्ज्ञानं गृह्यतो भवेत् ।**
**प्रायश्चित्तमतस्तादृगधिकार्यत्र किं भवेत् ॥३०९॥**

नन्वयमन्यशास्त्ररतो गुरुश्छद्मादिना वा शैवं शास्त्रं गृह्णातु, प्रायश्चित्ती वा भवतु किमनया नश्चिन्तया, शिष्यं तावदनुगृह्णात्येवेत्याशङ्क्याह

**फलाकाङ्क्षायुतः शिष्यस्तदेकायत्तसिद्धिकः ।**
**ध्रुवं पचेत नरके पायश्चित्त्युपवसेनात् ॥३१०॥**

शिष्यस्तावत्फलं किंचिदाकाङ्क्षते, तच्च गुर्वायत्तमित्यसद्गुरुप्राप्त्यांस्य तत्सिद्धिर्मा भूत्प्रत्युत

'................तत्संपर्की तु पञ्चमः ।'

इत्युक्त्या प्रायश्चित्तिगुरूपसेवनाद्ध्रुवमसौ नरके पच्यते महानस्यानर्थः स्यादित्यर्थः । तदुक्तं

'यदा जानन्ति नो तत्त्वं छद्माद्गृह्णन्ति कौलिकम् ।
महापातकिनो केन नरकगन्तुकामिनः ॥'

इत्युपक्रम्य

'महार्थं भैरवोक्तं वै ज्ञानविज्ञानभाण्डकम् ।
स्वयं गृहीत्वा त्वाचारं दीक्षानुग्रहकारिणः ॥
विक्रीणन्त्यात्मभोगार्थं पशूनामीदृशात्मनाम् ।
ते पठन्ति महाघोरे नरके तैः समं ततः ॥

सपुत्रमित्रभृत्याश्च यावत्सप्तकुलैः सह ।
न शक्नुवन्ति वै तेषां प्रायश्चित्तानि शुद्धये ।।'

इति ।।३१०।।

नन्वस्य गुरौ देवे च शक्तिपातलिङ्गं भक्तिर्दृश्यते इति शिवेनैवासौ तथा नियुक्तः, तदस्य को दोषो येनैवं स्यादित्याशङ्क्य ाह

**तिरोभावप्रकारोऽयं यत्तादृशि नियोजितः ।**
**गुरौ शिवे न तद्भक्तिः शक्तिपातोऽस्य नोच्यते ।।३११।।**

अनेन चानपेक्षत्वसिद्ध्यनन्तरमनुजोद्देशोद्दिष्टं तिरोभावविचित्रत्वमप्युपक्रान्तम् ।।३११।।

ननु भवत्वेवं, यस्मात्पुनरनेन च्छद्मापश्रवणादिना ज्ञानमाहृतं, तेन गुरुणा किं कार्यमित्याशङ्क्याह

**यदा तु वैचित्र्यवशाज्जानीयात्तस्य तादृशम् ।**
**विपरीतप्रवृत्तत्वं ज्ञानं तस्मादुपाहरेत् ।।३१२।।**
**तं च त्यजेत्पापवृत्तिं भवेत्तु ज्ञानतत्परः ।**

यदेति कालान्तरे, प्रथममेव हि तथात्वे ज्ञानदानमेव न भवेदिति भावः । वैचित्र्यं नानाप्रकारं व्यापारव्याहारादि । उपाहरेदिति ज्ञानाहृतिलक्षणया वक्ष्यमाणया युक्त्या । त्यजेदिति तत्सहवासादि न कुर्यादित्यर्थः, अत्र हेतुः पापवृत्तिमिति । एवमपि कृत्वा प्रायश्चित्तं विदध्यादित्युक्तं भवेत्तु ज्ञानतत्पर इति ।।

तदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

**यथा चौराद्गृहीत्वार्थं तं निगृह्णाति भूपतिः ।।३१३।।**
**वैष्णवादेस्तथा शैवं ज्ञानमाहृत्य सन्मतिः ।**

निग्रहं कुर्यादिति शेषः । सचात्र त्यागाद्यात्मा इत्युक्तप्रायम् ।।

नन्वस्य प्रथमं निर्विकारमेव प्रसन्नचेतसा गुरुणा ज्ञानमुपदिष्टं, तावतैव चास्य

'यस्मिन्काले तु गुरुणा निर्विकल्पं प्रकाशितम् ।
तदैव किल मुक्तोऽसौ..................... ।।'

इत्याद्युक्त्या कृतकृत्यत्वमिति किमेवं पुनरायातमित्याशङ्क्याह

**स हि भेदैकवृत्तित्वं शिवज्ञाने श्रुतेऽप्यलम् ॥३१४॥**
**नोज्झतीति दृढं वामाधिष्ठितस्तत्पशूत्तमः ।**
**शिवेनैव तिरोभाव्य स्थापितो नियतेर्बलात् ॥३१५॥**
**कथङ्कारं पतिपदं प्रयातु परतन्त्रितः ।**

नोज्झतीति तत्रानाश्वस्तत्वात् तदिदं दृढं वामाधिष्ठितत्वात् । परतन्त्रित इति नियतेर्बलात् । तदुक्तं

'वैष्णवा सौगताः श्रौतास्तथा श्रुत्यन्तवादिनः ।
इत्यादयो नाधिकृता जातुचित्पतिशासने ॥'

इति ॥

अत एवागमोऽप्येवमित्याह

**स्वच्छन्दशास्त्रे प्रोक्तं च वैष्णवादिषु ये रताः ॥३१६॥**
**भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया ।**

ननु भ्रमयतु नाम माया वैष्णवादीन्, यस्तु वैष्णवादिः सन्नपि शैवस्तस्य किमायातमित्याशङ्क्याह

**वैष्णवादिः शैवशास्त्रं मेलयन्निजशासने ॥३१७॥**
**ध्रुवं संशयमापन्न उभयभ्रष्टतां व्रजेत् ।**

मेलयन्निति उभयत्रापि अनाश्वासात् ॥

ननु एवमपि उभयभ्रष्टतायां को हेतुरित्याशङ्क्याह

**स्वदृष्टौ परदृष्टौ च समयोल्लङ्घनादसौ ॥३१८॥**
**प्रत्यवायं यतोऽभ्येति चरेत्तन्नेदृशं क्रमम् ।**

तदुक्तम्

'अथ वेदाश्रितः शैवं पुनरेव समीहते ।
वेदनष्टः शैवनष्टः पुनरेव भविष्यति ॥
सन्ध्यादिवन्दनं कार्यं यदि वैदिकदर्शने ।
लोपश्च शिवमन्त्राणां प्रायश्चित्तं विधीयते ॥

शिवधर्मो ह्यथादौ चेद्वेदधर्मो विलुप्यते ।
समेत्य वाप्यनुष्ठाने आदिमध्यान्तदूषणम् ॥
प्रतिपत्तिविरोधश्च विचित्तत्वं प्रपद्यते ।
कस्यारम्भः किमग्रेऽन्ते किं कृत्यं विचिकित्सया ॥
आदौ किंच करिष्यामि द्वाभ्यामादरशासनात् ।
श्रद्धानाशे भक्तिनाशः किं कथं च भविष्यति ।
क्रियाक्रमविरोधेऽपि प्रायश्चित्तं परस्परम् ॥'

इति ॥

न केवलमेतत्स्वच्छन्दशास्त्रे एवोक्तं, यावदन्यत्रापीत्याह

**उक्तं श्रीमद्गह्वरे च परमेशेन तादृशम् ॥३१९॥**

तदेव पठति

**नान्यशास्त्राभियुक्तेषु शिवज्ञानं प्रकाशते ।**

न प्रकाशते इनि तत्राधिकारिणस्ते न भवन्तीत्यर्थः ॥

तदेव विभज्य दर्शयति

**तन्त्र सैद्धान्तिको वामे नासौ दक्षे स नो मते ॥३२०॥**
**कुलकौले त्रिके नासौ पूर्वः पूर्वः परत्र तु ।**

अधिकारी न भवेदिति संबन्धः । अयं पुनरत्र विशेषो यत्पूर्वः पूर्वः परत्र सर्वत्राधिकारी भवेदित्युक्तं पूर्वः पूर्वः परत्र त्विति ॥

ननु समानेऽप्यन्यशास्त्राभियुक्तत्वे पूर्वः पूर्वः परत्र चेदधिकारी, तत्परः परः पूर्वत्र कस्मान्नेत्याशङ्क्याह

**अवच्छिन्नोऽनवच्छेदं नो वेत्त्यानन्त्यसंस्थितः ॥३२१॥**
**सर्वसहस्ततोऽधःस्थ ऊर्ध्वस्थोऽधिकृतो गुरुः ।**

इहोपाधीनां नानात्वादानन्त्यसंस्थितोऽवच्छिन्नः संकुचितः प्रमातानवच्छेदमविद्यमानावच्छेदमनवच्छिन्नं पूर्णं प्रमातारं नो वेत्ति तदात्मतया न भायात् । ततोऽनवच्छिन्नत्वात्सर्वंसह ऊर्ध्वस्थ एव गुरुरधःस्थे प्रतिनियते वैष्णवादावधिकृतो, नत्वधःस्थ उर्ध्वस्थे । सहि संकुचितज्ञान इति कथं पूर्णज्ञानावगाहनपात्रतामियात् ॥

नन्वेवमूर्ध्वस्थोऽपि पूर्णज्ञानो गुरुरधःस्थे वैष्णवादौ कथंकारमधिकारं कुर्यादित्याशङ्क्याह

**स्वात्मोयाधरसंस्पर्शात्प्राणयन्नधराः क्रियाः ।।३२२।।**

**सफलीकुरुते यत्तदूर्ध्वस्थो गुरुरुत्तमः ।**

यदूर्ध्वस्थो गुरुः स्वात्मसाक्षात्कारात् संपूर्णाद्वयज्ञानपरामृतसंपातादधराः क्रियाः प्राणयंस्तदनुप्राणिताः संपादयन् परिपूर्णभुक्तिमुक्तिप्रदतया सफलयति, तदसावुत्तमः सर्वातिशायीत्यर्थः ॥

नन्वेवंविधोऽप्यूर्ध्वस्थो गुरुरधःस्थे वैष्णावादौ किं कुर्यात्, नह्यसावेतदनुग्रहस्य पात्रमित्याशङ्क्याह

**अधःस्थदृक्स्थोऽप्येतादृग्गुरुसेवी भवेत्स यः ।।३२३।।**

**तादृक्शक्तिनिपातेद्धो यो द्रागूर्ध्वमिमं नयेत् ।**

यो ह्यधस्तनदर्शनस्थोऽपि वैष्णवादिः, स तादृशां मध्यात्तीव्रप्रायेण शक्तिपातेन इद्धः सन्नेतादृशमूर्ध्वस्थं गुरुं सेवमानो भवेत्, य इममधःस्थदृक्स्थमपि वैष्णवादिकं शीघ्रमेवोर्ध्वं नयेत् परसंविदैकात्म्येनावभासयेदित्यर्थः ॥

ननु यथा पूर्वः पूर्वः परत्र परत्राधिकारी, तथा परः परः पूर्वत्रापि कस्मान्नेत्याशङ्कां दृष्टान्तोपदर्शनेन प्रशमयति

**तत्तद्गिरिनदीप्रायावच्छिन्ने क्षेत्रपीठके ।।३२४।।**

**उत्तरोत्तरविज्ञाने नाधिकार्यधरोऽधरः ।**

इह यथा तैस्तैर्गिरिनदीप्रायैर्निम्नोन्नतैर्भूमिभागैरवच्छेदमीयुष्यूर्ध्वोर्ध्वे कोट्टप्राये क्षेत्रसंस्थानादावधरोऽधरो निम्ननिम्नदेशस्थो नाधिकारी, तथाधोऽधःस्थितो वैष्णवादिरुत्तरोत्तरे शैवादौ विज्ञानेऽपीति वाक्यार्थः ॥

न केवलमेतत्परमेवोद्दिश्योक्तं, यावत्स्वमपीत्याह

**उत्तरोत्तरमाचार्यं विदन्नप्यधरोधरः ।।३२५।।**

**कुर्वन्नधिक्रियां शास्त्रलङ्घी निग्रहभाजनम् ।**

शास्त्रलङ्घीति तदुक्तं

'न कुर्यादधिकारं तु आचार्ये महति स्थिते ।
यस्तु मोहवशात्कुर्याच्छाकिन्यो वै शपन्ति तम् ॥'

नन्वेवमस्तु शैववैष्णवादीनामाधरोत्तर्यं, शैवादीनामेव पुनः समानेऽपि पारमेश्वरे शक्तिपाते परस्परस्य किंनिमित्तमित्याशङ्क्याह

**शक्तिपातबलादेव ज्ञानयोग्यविचित्रता ॥३२६॥**

तद्वैचित्र्यमेव दर्शयति

**श्रौतं चिन्तामयं द्व्यात्मभावनामयमेव च ।**
**ज्ञानं तदुत्तरं ज्यायो यतो मोक्षैककारणम् ॥३२७॥**

चिन्तामयं च ज्ञानं मन्दस्वभ्यस्तभेदभिन्नतया द्विरूपमित्याह द्व्यात्मेति । तदुक्तं

'ज्ञानं च त्रिविधं प्रोक्तं तत्राद्यं श्रुतमिष्यते ।
चिन्तामयमथान्यच्च भावनामयमेव च ॥
शास्त्रार्थस्य परिज्ञानं विक्षिप्तस्य श्रुतं मतम् ।
इदमत्रेदमत्रेति इदमत्रोपयुज्यते ॥
सर्वमालोच्य शास्त्रार्थमानुपूर्व्या व्यवस्थितिः ।
तच्च चिन्तामयं ज्ञानं द्विरूपमुपदिश्यते ॥
मन्दस्वभ्यस्तभेदेन तत्र स्वभ्यस्तमुत्तमम् ।
सुनिष्पन्ने ततस्तस्मिञ्जायते भावनामयम् ॥
यतो योगं समासाद्य योगी योगफलं लभेत् ।
एवं विज्ञानभेदेन ज्ञानी प्रोक्तश्चतुर्विधः ॥'

इति । तदुत्तरमिति तेषां श्रौतादीनां चतुर्णां ज्ञानानां मध्यादुत्तरं भावनामयमित्यर्थः ॥३२७॥

मोक्षैककारणत्वमेव विभज्य दर्शयति

**तत्त्वेभ्य उद्धृतिं क्वापि योजनं सकलेऽकले ।**
**कथं कुर्याद्विना ज्ञानं भावनामयमुत्तमम् ॥३२८॥**

तत्त्वेभ्य इत्यशुद्धेभ्यः, क्वापीति यथाभिमते, ज्ञान्यपि हि गुरुरकृततत्तत्त्वसाक्षात्कारः कथमेवं कुर्यादित्याशयः ॥३२८॥

ननु

'द्वावेव मोक्षदौ प्रोक्तौ ज्ञानी योगी च शांकर ।'

इत्याद्युक्त्या योगिनोऽपि मोक्षकारणत्वमुक्तं, तत्कथमिह भावनामयस्यैव ज्ञानस्य तदेककारणत्वमुच्यत इत्याशङ्क्याह

**योगी तु प्राप्ततत्तत्त्वसिद्धिरप्युत्तमे पदे ।**
**सदाशिवाद्ये स्वभ्यस्तज्ञानित्वादेव योजकः ॥३२९॥**

ननु योगबलादेव योगिनस्तत्तत्त्वसिद्धिर्जायते इति तत एवासौ तेषु तेषु तत्त्वेषु शिष्यस्य योजनां विदध्यादिति किमस्यैवंविधेन ज्ञानेन प्रयोजनमित्याशङ्क्याह

**अधरेषु तत्त्वेषु या सिद्धिर्योगजास्य सा ।**
**विमोचनायां नोपायः स्थितापि धनदारवत् ॥३३०॥**

ननु केनैवमुक्तं यदस्योर्ध्वेषु सदाशिवादितत्त्वेषु योगजा सिद्धिर्न स्यात्, यद्वशात्सर्वमपीदं जगदुन्मोचयेदित्याशङ्क्याह

**यस्तूत्पन्नसमस्ताध्वसिद्धिः सहि सदाशिवः ।**
**साक्षादेष कथं मर्त्यान्मोचयेद्गुरुतां व्रजन् ॥३३१॥**

अयमत्र पिण्डार्थः—इह ज्ञानी तावच्चतुर्विधः । तस्य यथोत्तरं वैशिष्ट्यमित्युक्तप्रायम् । ततश्च योगिविदभ्यासरहितोऽपि ज्ञानी सर्वथा स्वभ्यस्तभावनामयविज्ञानप्रसादासादितभैरवीभावो दीक्षादिक्रमे प्रशस्यतर इत्येवमुक्तं भावनामयमेव ज्ञानं ज्याय इति । योगी चतुर्विधः संप्राप्तो घटमानः सिद्धयोगः सुसिद्धश्चेति । तत्र संप्राप्तः—प्राप्तयोगोपदेशमात्रो, घटमानश्च तदभ्यासमात्रनिष्ठ इत्येतौ स्वयमेव न तथा योगे वा प्ररूढाविति परस्य किं कुरुतः । सिद्धयोगस्य पुनः स्वभ्यस्तज्ञानमप्यस्ति,—इति तत्प्रयोजकीकारेणैवायं मोचको, नान्यथेत्युक्तं 'योगी तु स्वभ्यस्तज्ञानित्वादेव उत्तमे पदे योजकः' इति 'स्थितापि योगजास्य सिद्धिर्विमोचनायां नोपायः' इति च । उक्तं च

'उत्तरोत्तरवैशिष्ट्यमेतेषां समुदाहृतम् ।
ज्ञानिनां योगिनां चैव सिद्धयोगविदुत्तमः ॥
यतोऽस्य ज्ञानमप्यस्ति पूर्वो योगफलोज्झितः' । ( मा० तं० )

इति। सुसिद्धस्तु—

'यः पुनर्यत्र तत्रैव संस्थितोऽपि यथा तथा।
भुञ्जानस्तत्फलं तेन हीयते न कथंचन॥
सुसिद्धः स तु बोद्धव्यः सदाशिवसमः प्रिये।' ( मा० तं० )

इत्याद्युक्त्या सदैवास्खलितस्वरूपः शिव एव इत्यसौ गुरुतां व्रजन् विद्येशानपास्य कथं साक्षान्मोचयेन्मर्त्यान्, पारम्पर्येण तु मोचयेदेवेति तदभिधानस्येह कोऽवसर इत्यर्थः। यदुक्तमनेनैवान्यत्र 'सुसिद्धस्तु शिव एवेति किं तत्रोच्यते इति। ततश्चैवं ज्ञानयोगयोर्विभागं विचार्य स्वभ्यस्तज्ञानवानेव गुरुर्मोक्षप्रद इति सर्वत्रोक्तं येनास्माभिरप्येवमिहाभिहितम्॥

तदाह

**तेनोक्तं मालिनीतन्त्रे विचार्य ज्ञानयोगिते।**
**यतश्च मोक्षदः प्रोक्तः स्वभ्यस्तज्ञानवान्बुधैः॥३३२॥**

चशब्दोऽवधारणे भिन्नक्रमः। तेन स्वभ्यस्तज्ञानवानेव गुरुर्मोक्षप्रदः प्रोक्त इति॥

ततश्चेदं सिद्धमित्याह

**तस्मात्स्वभ्यस्तविज्ञानतैवैकं गुरुलक्षणम्।**

एकमिति न द्वितीयं, योगित्वमपीत्यर्थः॥

ननु योग्यपि गुरुरुक्तः, तत्कथमेवमभिधातुं युज्यते। सत्यं, किंत्वयमस्ति विभागोयज्ज्ञानी तावद्योगिनो विशिष्यते इत्युक्तं, तत्रापि च कुत्र ज्ञानी योगी वा गुरुः कार्यः, कुत्र वा परिहार्य इति। सचेहास्माभिर्गुरुमुखाधिगतः प्रकाश्यते इत्याह

**विभागस्त्वेष मे प्रोक्तः शंभुनाथेन दर्श्यते॥३३३॥**

एष इति वक्ष्यमाणः॥ ३३३॥

तदेवाह

**मोक्षज्ञानपरः कुर्याद्गुरुं स्वभ्यस्तवेदनम्।**
**अन्यं त्यजेत्प्राप्तमपि तथाचोक्तं शिवेन तत्॥३३४॥**

अन्यमित्यस्वभ्यस्तज्ञानम्। ननु 'गुरुत्यागाद्भवेन्मृत्युः' इत्यादिना प्राप्तस्य गुरोस्त्यागे दोषोऽभिहितः—इति कथमेवमुक्तमित्याशङ्क्याह 'तथा चोक्तं शिवेन तत्' इति। नैतन्निष्प्रमाणकमित्यर्थः॥ ३३४॥

तदेव पठति

**आमोदार्थी यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।**
**विज्ञानार्थी तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ।।३३५।।**

ननु विज्ञानार्थी शिष्यः, तच्चानेन कथंचिदाद्यादेव प्राप्तमिति किमस्य गुर्वन्तरगमनेनेत्याशङ्क्याह

**शक्तिहीनं गुरुं प्राप्य मोक्षज्ञानं कथं श्रयेत् ।**
**नष्टमूले द्रुमे देवि कुतः पुष्पफलादिकम् ।।३३६।।**

शक्तिहीनमिति विज्ञानदानादावसामर्थ्यात् । स हि स्वयमज्ञ इति परस्यापि किं कुर्यादित्याशयः ॥ ३३६ ॥

नन्विह भावना नाम मुख्या, साचाज्ञेऽपि गुरौ क्रियमाणावश्यं फलेदिति किं तत्त्यागेनेत्याशङ्क्याह

**उत्तरोत्तरमुत्कर्षलक्ष्मीं पश्यन्नपि स्थितः ।**
**अधमे यः पदे तस्मात्कोऽन्यः स्याद्दैवदग्धकः ।।३३७।।**

एवं भोगमोक्षाद्यभिवाञ्छतावश्यमुत्कृष्ट एव गुरुराश्रयणीयो, येनास्य तत्सिद्धिरयत्नमेव स्यादित्याह

**यस्तु भोगं च मोक्षं च वाञ्छेद्विज्ञानमेव च ।**
**स्वभ्यस्तज्ञानिनं योगसिद्धं स गुरुमाश्रयेत् ।।३३८।।**

योगसिद्धमिति सिद्धयोगं तृतीयं योगिनमित्यर्थः, तस्य चावश्यभावि स्वभ्यस्तज्ञानमित्युक्तं स्वभ्यस्तज्ञानिनमिति, यत्समनन्तरमेव संवादितं यतोऽस्य ज्ञानमप्यस्तीति ॥ ३३८ ॥

एवंविधश्चेद्गुरुर्न प्राप्यते, तदा किं कर्तव्यमित्याशङ्क्याह

**तदभावे तु विज्ञानमोक्षयोर्ज्ञानिनं श्रयेत् ।**

विज्ञानमोक्षयोरिति तन्निमित्तमित्यर्थः ॥

एवमपि भुक्त्यर्थिना किं कार्यमित्याशङ्क्याह

**भुक्त्यंशे योगिनं यस्तत्फलं दातुं भवेत्क्षमः ।।३३९।।**

श्रयेदित्यनुषज्यते । सचार्थाद्घटमानसिद्धयोगयोरन्तरालवर्ती मितः । तदिति भुक्तिलक्षणम् ॥३३९॥

यः पुनः संप्राप्तो घटमानो वा योगी भुक्तिमात्रमपि दातुं न समर्थः परं तदुपायोपदेशकुशलः, तमनादृत्यापि ज्ञानी गुरुः कार्यो यस्तदुपायमुपदिशन् क्रमेण मोचयेदपीत्याह

**फलदानक्षमे योगिन्युपायैकोपदेशिनि ।**
**वरं ज्ञानी योऽभ्युपायं दिशेदपि च मोचयेत् ।।३४०।।**

ननु यद्येवं मितोऽपि ज्ञानी गुरुः कार्यः, तद्विज्ञानार्थिनः शिष्यस्य तत्परिपूर्तिः कुतः स्यादित्याशङ्क्याह

**ज्ञानी न पूर्ण एवैको यदि ह्यंशांशिकाक्रमात् ।**
**ज्ञानान्यादाय विज्ञानं कुर्वीताखण्डमण्डलम् ।।३४१।।**
**तेनासंख्यान्गुरून्कुर्यात्पूरणाय स्वसंविदः ।**

यदि नाम हि एक एव न पूर्णज्ञानशाली गुरुः प्राप्यते, तदेकैकतः परिमितज्ञानाद्गुरोरंशांशिकाक्रमेणापि ज्ञानान्यादाय स्वात्मन्यखण्डमण्डलं पूर्णं ज्ञानं कुर्यात्, अतश्चैवंविधादेकस्मादेव गुरोस्तदलाभात्स्वसंवित्परिपूरणाय महतापि प्रयत्नेन निःसंख्याका गुरवः कार्याः, नैवं कश्चित्प्रत्यवाय इत्यर्थः ।।

तीव्रशक्तिपाताघ्रातः पुनः पूर्णज्ञानमेव गुरुमासादयेत् यत्प्रसादादनायासमेवास्य स्वात्मनो विज्ञानपारिपूर्ण्यं समुदियादित्याह

**धन्यस्तु पूर्णविज्ञानं ज्ञानार्थी लभते गुरुम् ।।३४२।।**

अत्र चाहमेवोदाहरणं यद्विज्ञानार्थिना मया लोकोत्तरे द्वयाद्वयात्मनि शैवशास्त्रादावभिख्यामात्रप्रख्यापितपरश्रेयःसंश्रयः श्रीमान् कल्याणः पूर्णविज्ञानवानेक एव गुरुर्लब्धः, पदवाक्यप्रमाणादौ लौकिके श्रीमान् सुगृहीतनामधेयः शङ्खधरश्चेति ।।३४२।।

ननु यदि नाम एकस्मादेव पूर्णविज्ञानशालिनो गुरोरनायासमेव पूर्णं ज्ञानं स्यात् तदस्तु, तदर्थं पुनर्नानागुर्वादिसंभरणात्मा प्रयत्नोऽपि कस्मात्क्रियते इत्याशङ्क्याह

**नानागुर्वागमस्रोतःप्रतिभामात्रमिश्रितम् ।**
**कृत्वा ज्ञानार्णवं स्वाभिर्विप्रुड्भिः प्लावयेन्न किम् ।३४३।**

स्रोतः सन्ततिर्नदीप्रवाहश्च, प्रतिभा सांमुख्येन भानं, मिश्रितं पूरितं किं न प्लावयेदिति सर्वमेव ज्ञानसंविभागभाजनं कुर्यादित्यर्थः ॥

एतच्च गुरुभिरप्युक्तमित्याह

**आ तपनान्मोटकान्तं यस्य मेऽस्ति गुरुक्रमः ।**
**तस्य मे सर्वशिष्यस्य नोपदेशदरिद्रता ॥३४४॥**
**श्रीमता कल्लटेनेत्थं गुरुणा तु न्यरूप्यत ।**

अनेनैवाशयेन मयापि नानागुरूपसेवनं कृतमित्याह

**अहमप्यत एवाधःशास्त्रदृष्टिकुतूहलात् ॥३४५॥**
**तार्किकश्रौतबौद्धार्हद्वैष्णवादीन्नसेविषि ।**

कुतूहलादिति नत्वादरात्, तार्किका नैयायिकवैशेषिकादयः ॥

ननु यथा वैष्णवादिभ्यः शैवादीनां गुरूणामेवमुत्कर्षः तथैषामधरशासनस्थानामपि परस्परं किमस्ति नवेत्याशङ्क्याह

**लोकाध्यात्मातिमार्गादिकर्मयोगविधानतः ॥३४६॥**
**संबोधोत्कर्षबाहुल्यात्क्रमोत्कृष्टान्विभावयेत् ।**

लोकः श्रुतिस्मृत्यादिः, अध्यात्मं वेदान्तादिः, अतिमार्गो लौकिकमार्गातीतं सांख्यपातञ्जलादि, एवमादावग्निष्टोमादेः कर्मणः, चित्तवृत्तिनिरोधाद्यात्मनश्च योगस्य विधानतो हेतोः सम्यग्बोधस्य यथायथमुत्कर्षतारतम्यात् क्रमोत्कृष्टान्वैदिकादीन् गुरून्विभावयेज्जानीयादित्यर्थः ॥

एवं वैष्णवादिक्रमेण यथायथं संबोधोत्कर्षभाजामेव मुनीनामस्मद्दर्शनं प्रत्यपि जिज्ञासा जातेत्याह

**श्रीपूर्वशास्त्रे प्रष्टारो मुनयो नारदादयः ॥३४७॥**
**प्राग्वैष्णवाः सौगताश्च सिद्धान्तादिविदस्ततः ।**
**क्रमात्त्रिकार्थविज्ञानचन्द्रोत्सुकितदृष्टयः ॥३४८॥**

एवं यथायथमूर्ध्वोर्ध्वक्रमेण गुरुशास्त्रपरिचयात् संबोधोत्कर्षो भवेदिति न गुरुभूयस्त्वे विचिकित्सितव्यमित्याह

**तस्मान्न गुरुभूयस्त्वे विशङ्केत कदाचन ।**

ननु

'गुर्वन्तररते मूढे आगमान्तरसेवके ।
शक्तिहिंसाकरे द्विष्टे संपर्कं नैव कारयेत् ॥'

इत्याद्युक्त्या गुर्वन्तररतस्यास्पृश्यत्वमभिहितमिति गुर्वन्तरगमने विवेकिनः शङ्कावश्यमुदियादित्येवं कस्मादुक्तमित्याशङ्क्याह

**गुर्वन्तररते मूढे आगमान्तरसेवके ॥३४९॥**
**प्रत्यवायो य आम्नातः स इत्थमिति गृह्यताम् ।**

इत्थमिति वक्ष्यमाणप्रकारेण ॥

तदेवाह

**यो यत्र शास्त्रेऽधिकृतः स तत्र गुरुरुच्यते ॥३५०॥**
**तत्रानधिकृतो यस्तु तद्गुर्वन्तरमुच्यते ।**

तत्रानधिकृत इति यथा वामे सैद्धान्तिकः ॥

एतदेव दृष्टान्तोपदर्शनेन हृदयङ्गमयति

**यथा तन्मण्डलासीनो मण्डलान्तरभूपतिम् ॥३५१॥**
**स्वमण्डलजिगीषुः सन्सेवमानो विनश्यति ।**
**तथोत्तरोत्तरज्ञानसिद्धिप्रेप्सुः समाश्रयन् ॥३५२॥**
**अधराधरमाचार्यं विनाशमधिगच्छति ।**

इह यथा तस्मिन्नेव मण्डले स्थितः कश्चित्तदेव स्वमास्पदभूतं मण्डलमपहृतप्रायं जेतुमिच्छुस्तत्रानधिकारिणमपि मण्डलान्तरभूपतिं सेवमानो विनश्यति तज्जयोऽस्य माभूत् प्रत्युतानर्थान्तरं किंचिदुदियादित्यर्थः । एवमूर्ध्वोर्ध्वं एव ज्ञाने स्थितस्तत्सिद्धिमेव च प्राप्तुमिच्छुस्तदनधिकृतमधराधरमाचार्यं समाश्रयन्विनाशमधिगच्छति तत्समुदितेऽमुष्य भुक्तिमुक्ती मा स्यातां प्रत्युत प्रत्यवायित्वं भवेदित्यर्थः ॥

न केवलमेतत्स्वदर्शनमेवाधिकृत्योक्तं, यावद्दर्शनान्तराण्यपीत्याह

**एवमेवोर्ध्ववर्तिष्णोरागमात्सिद्धिवाञ्छकः ॥३५३॥**
**मायीयशास्त्रनिरतो विनाशं प्रतिपद्यते ।**
**उक्तं च श्रीमदानन्दे कर्म संश्रित्य भावतः ॥३५४॥**

**जुगुप्सते तत्तस्मिंश्च विफलेऽन्यत्समाश्रयेत् ।**
**दिनाद्दिनं ह्रसंस्त्वेवं पच्यते रौरवादिषु ।।३५५।।**

न चैतन्न्यायमात्रसिद्धमेवेत्याह 'उक्तं च' इत्यादि । यः कश्चिदुत्तरोत्तरशास्त्रीयमपि कर्म संश्रित्य भावतो जुगुप्सते तत्र निष्ठां न यायादिति तस्मिन्निष्फलेऽन्यन्मायीयशास्त्रीयं कर्म सम्यगाहृदयादाश्रयेत्, स पुनरिह लोके दिनाद्दिनं ह्रसन् धनदारादिभिरपचीयमानः परत्र रौरवादिषु पच्यते पापफलभाग्भवेदित्यर्थः । एवंपाठश्च जरत्पुस्तकेषु शतशो दृष्टः ।।

ननु यद्येवमूर्ध्वशासनस्थोऽप्यधराधरे गुर्वादौ रज्यन् प्रत्यवेयात्, तदूर्ध्वोर्ध्वं मार्गं प्राप्तुमिच्छुरधरं गुर्वादि परिहरन् कीदृक् स्यादित्याशङ्क्याह

**यस्तूर्ध्वोर्ध्वपथप्रेप्सुरधरं गुरुमागमम् ।**
**जिहासेच्छक्तिपातेन स धन्यः प्रोन्मुखीकृतः ।।३५६।।**

एवमेवंविधानामेवानुग्राह्यतयास्मद्दर्शनसंस्कारविशेषोऽप्युक्त इत्याह

**अत एवेह शास्त्रेषु शैवेष्वेव निरूप्यते ।**
**शास्त्रान्तरार्थनाभ्वस्तान्प्रति संस्कारको विधिः ।।३५७।।**

नचैतदेवास्य दर्शनस्योत्तमत्वे निमित्तं, यावदन्यदपीत्याह

**अतश्चाप्युत्तमं शैवं योऽन्यत्र पतितः सहि ।**
**इहानुग्राह्य ऊर्ध्वोर्ध्वं नेतस्तु पतितः क्वचित् ।।३५८।।**

ऊर्ध्वोर्ध्वमिति यथा वैष्णवादिः शैवे, स वामे सच दक्षे इति । क्वचिदिति वैष्णवादौ ।।

एवं ह्यस्मद्दर्शन इव तत्रापि तं प्रति कश्चन लिङ्गोद्धारप्रायः संस्कारविशेषोऽभिहितः स्यात् । तदाह

**अत एव हि सर्वज्ञैर्ब्रह्मविष्णवादिभिर्निजे ।**
**न शासने समाम्नातं लिङ्गोद्धारादि किंचन ।।३५९।।**

सर्वज्ञैरिति ते ह्येवं जानते यदूर्ध्वोर्ध्ववर्तिनां शैवादीनामस्मदादिदर्शनानुग्राह्यत्वं नास्तीति ।।

ननु यद्येते सर्वज्ञाः, तदत्युत्कृष्टं शैवं ज्ञानमपहाय कस्मादेवमपकृष्टं ज्ञानमादिशन्नित्याशङ्क्याह

**इत्थं विष्णवादयः शैवपरमार्थैकवेदिनः ।**
**कांश्चित्प्रति तथादिक्षुस्ते मोहाद्विमतिं श्रिताः ॥३६०॥**

कांश्चिदिति तावदुपदेशयोग्यान् । तथेति अपकृष्टज्ञानात्मना प्रकारेणेत्यर्थः । तेषां च तावतैव मोहवशादिदमेव तत्त्वमिति विरुद्धो निश्चय इत्युक्तं ते मोहाद्विमतिं श्रिता इति ॥

तेषां च तत्रैवाभिनिवेशाद्ब्रह्माद्यैरपि तदेव दार्ढ्येनोपदिष्टमित्याह

**तथाविधामेव मतिं सत्यसंस्पर्शनाक्षमाम् ।**
**दृष्ट्वैषां ब्रह्मविष्ण्वाद्यैर्बुद्धैरपि तथोदितम् ॥३६१॥**

तथाविधामिति विरुद्धाम्, अत एवोक्तं सत्यसंस्पर्शनाक्षमामिति । बुद्धैरपि शैवपरमार्थतया प्रबुद्धैरपीत्यर्थः । तथेति तत्तदाशयोचितेनापकृष्टज्ञानात्मना प्रकारेणेत्यर्थः ॥ ३६१ ॥

प्रतिज्ञातमेवाह्निकार्थं प्रथमार्धेनोपसंहरति

**इत्येष युक्त्यागमतः शक्तिपातो विवेचितः ।**

विवेचित इति शिवम् ॥

परमेशशक्तिपातव्यक्तस्वात्मीयवीर्यवैभवतः ।
प्रभविष्णुराह्निकार्थं त्रयोदशं जयरथः स्फुटं व्यवृणोत् ॥

**इति श्रीमहामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्ताचार्यविरचिते तन्त्रालोके श्रीजयरथविरचितविवेकाभिख्यव्याख्योपेते शक्तिपातप्रदर्शनं नाम त्रयोदशमाह्निकम् ॥ १३ ॥**

अथ

# श्रीतन्त्रालोके

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते
श्रीजयरथकृतविवेकोपेते

## चतुर्दशमाह्निकम्

यो योगिनीप्रियतया तिरोहितिव्यपगतिक्रमं जगताम् ।
प्रबलीकरोति बलतो बलाय तस्मै बलिं यामः ॥

इह तावत्परमेश्वरः पञ्चविधकृत्यकारीति सर्वत्रोक्तम् । तत्रास्य पूर्वं संसारचित्रतानिरूपणावसरे सृष्ट्यादित्रयं दर्शितं समनन्तराह्निके चानुग्रह इति संप्रत्यवशिष्टं तिरोभावाख्यं पञ्चमं कृत्यं द्वितीयार्धेन प्रतिपादयितुमाह

**तिरोभावस्वरूपं तु कथ्यमानं विविच्यताम् ।**

इह दीक्षाया उपक्रमेऽपि एतन्निर्देशेऽयमाशयो यत्प्रथमं हेये प्रदर्शिते परमुपादेये विश्रान्तिर्भवेदिति ॥

तदेव अवतारयति

**स्वभावात् परमेशानो नियत्यनियतिक्रमम् ॥ १ ॥**
**स्पृशन्प्रकाशते येन ततः स्वच्छन्द उच्यते ।**

स्वभावादिति स्वो भाव इच्छा तत इत्यर्थः ॥ तत्रास्य नियतिक्रमस्पर्शेन प्रकाशनं दर्शयति

**नियतिं कर्मफलयोराश्रित्यैष महेश्वरः ॥ २ ॥**
**सृष्टिसंस्थितिसंहारान्विधत्तेऽवान्तरस्थितीन् ।**

अवान्तरस्थितीनिति शाक्तमहासृष्ट्याद्यपेक्षया । ते च पृथ्व्याद्यण्डत्रय-विषयाः । यदुक्तं प्राक्

'कालाग्निर्भुवि संहर्ता मायान्ते कालतत्त्वराट् ।
श्रीकण्ठोमूल एकत्र सृष्टिसंहारकारकः ॥
तल्लयोऽवान्तरस्तस्मा.............................।' ( ६।१७२ )

इति ॥ २ ॥

अन्यत्र पुनरस्य नियतिस्पर्शो नास्तीत्याह

**महासर्गे पुनः सृष्टिसंहारानन्त्यशालिनि ॥ ३ ॥**
**एकः स देवो विश्वात्मा नियतित्यागतः प्रभुः ।**

महत्त्वमेवास्य दर्शयति सृष्टिसंहारानन्त्यशालिनीति । यदुक्तं प्राक्

'श्रीमानघोरः शक्त्यन्ते संहर्ता सृष्टिकृच्च सः ।
तत्सृष्टौ सृष्टिसंहारा निःसंख्या जगतां यतः ॥
अन्तर्भूतास्ततः शाक्ती महासृष्टिरुदाहृता ।' ( ६।१७३ )

इति । नियतित्यागत इति नहि इयं कर्मभूर्येनात्र तदपेक्षया नियतिपरिग्रहोऽपि स्यात् ॥

न केवलमत्रास्य नियतित्यागो, यावदवान्तरसर्गादावपीत्याह

**अवान्तरे या च सृष्टिः स्थितिश्चात्राप्ययन्त्रितम् ॥ ४ ॥**
**नोज्झत्येष वपुस्त्यक्तनियतिश्च स्थितोऽत्र तत् ।**

नोज्झतीति तथात्वे ह्यस्य स्वातन्त्र्यखण्डना भवेदिति भावः ॥ ४ ॥

नियतित्यागात्यागयोः को विशेष इत्याशङ्क्याह

**नियत्यैव यदा चैष स्वरूपाच्छादनक्रमात् ॥ ५ ॥**
**भुङ्क्ते दुःखविमोहादि तदा कर्मफलक्रमः ।**
**त्यक्त्वा तु नियमं कार्मं दुःखमोहपरीतताम् ॥ ६ ॥**
**बिभासयिषुरास्तेऽयं तिरोधानेऽनपेक्षकः ।**

स्वरूपाच्छादनक्रमादिति तमवलम्ब्येत्यर्थः । कार्मनियमत्यागे हेतुरनपेक्षक इति । यदभिप्रायेणैव वक्ष्यति

'नचास्य कर्ममहिमा तादृग्येनेत्थमास्त सः ।' (१४)

इति ॥ ६ ॥

ननु तिरोधानमेव नाम किमुच्यते यत्रापि विभोः कर्मादिनैरपेक्ष्यमित्याशङ्कां गर्भीकृत्य कार्यद्वारेण दृष्टान्तोपदर्शनपुरःसरं तत्स्वरूपमेवाभिधत्ते

**यथा प्रकाशस्वातन्त्र्यात् प्रतिबुद्धोऽप्यबुद्धवत् ॥ ७ ॥**

**आस्ते तद्वदनुत्तीर्णोऽप्युत्तीर्ण इव चेष्टते ।**

इह यथा प्रकाश एव अहंपरामर्शोदयात् प्रबुद्धोऽपि अप्रबुद्धवदास्ते 'वीतरागा अपि सरागवत् व्यवहरन्ति' इति न्यायेन गोपितस्वात्मवीर्यावष्टम्भोऽवतिष्ठते, तथा कश्चिदनुत्तीर्णोऽपि पारमेश्वरशक्तिपाताभावादनाभासितरूपोऽपि उत्तीर्ण इव आभासितरूप इव चेष्टते परविप्रलम्भाय दाम्भिकतया भक्तिश्रद्धादि विदध्यात्। वस्तुतस्तु पारमेश्वरमन्त्रतन्त्रादावस्य न कश्चिदादरप्रत्यय इत्येतत्तिरोधानं नाम इत्यर्थः। यदुक्तं प्राक्

> 'अनाभासितरूपोऽपि तदाभासितयेव यत् ।
> स्थित्वा मन्त्रादि संगृह्य त्यजेत्सोऽस्य तिरोभवः ॥' ( १३।१२१ )

इति ॥ ७ ॥

ननु इह तावत्

> 'शिवोऽहमद्वितीयोऽहं.....................।'

इत्याद्युक्त्या शिवतामनापन्नोऽपि तादात्म्यप्रतिपत्तये तथा भावयेदित्याम्नातं, तदेवमेवास्य चेच्चेष्टा तदा को दोष इत्याशङ्क्याह

**यथा च बुद्धस्तां मूढचेष्टां कुर्वन्नपि द्विषन् ॥ ८ ॥**

**हृद्यास्ते मूढ एवं हि प्रबुद्धानां विचेष्टितम् ।**

कुर्वन्नपि हृदि द्विषन्नास्ते तत्राहृदयादस्य विश्रान्तिर्नास्तीत्यर्थः ॥ ८ ॥

नचैतदस्माभिरेवोक्तमित्याह

**श्रीविद्याधिपतिश्चाह मानस्तोत्रे तदीदृशम् ॥ ९ ॥**

तदेव पठति

> **ये यौष्माके शासनमार्गे कृतदीक्षाः**
> **संगच्छन्तो मोहवशाद्विप्रतिपत्तिम् ।**
> **नूनं तेषां नास्ति भवद्भानुनियोगः**
> **सङ्कोचः किं सूर्यकरैस्तामरसानाम् ॥ १० ॥**

ज्ञातज्ञेया धातृपदस्था अपि सन्तो
ये त्वन्मार्गात्कापथगास्तेऽपि न सम्यक् ।
प्रायस्तेषां लैङ्गिकबुद्ध्यादिसमुत्थो
मिथ्याबोधः सर्पवसादीपजकल्पः ॥ ११ ॥
यस्माद्विद्धं सूतकमुख्येन नु ताम्रं
तद्यद्भूयः स्वां प्रकृतिं नो समुपेयात् ।
नो तैः पीतं भूतलसंस्थंरमृतं
तद्येषां तृट्क्षुद्दुःखविबाधाः पुनरस्मिन् ॥ १२ ॥

भवद्दर्शनमनुप्रविश्यापि तत्र ये विप्रतिपन्नास्तेषां शक्तिपात एव नायातः, अतश्च भवद्दर्शनस्य उत्तानतया तत्त्वं जानाना अपि ततः सांख्यादिकुमार्गं गता इति ते सम्यक् विलयशक्त्याघ्राता एवेत्यर्थः । यतस्तेषां सर्पवसादीपादिवत् तद्दर्शनादुत्पन्नं मिथ्याज्ञाननस्ति, येनैतदन्यथा जानते । सर्पवसादीपे हि सति सर्वं सर्पमयमेव दृश्यते इति । अतश्च दर्शनान्तरान्यथानुपपत्त्या एतन्निश्चीयते—यत्त्वद्दर्शने तिरोहितत्वादेते न प्ररोहमुपगता इति । नहि पारतेन विद्धं ताम्रं पुनस्ताम्रतां यायात्, न वा पीतामृतानां पुनस्तृडादिबाधा स्यात् ॥ १२ ॥

एवंच प्रबुद्धचेष्टैव तिरस्क्रियमाणत्वादेनं तिरोभावयेदित्याह

ततः प्रबुद्धचेष्टासौ मन्त्रचर्यार्चनादिका ।
द्वेषेद्धान्तर्दहत्येनं दाहः शङ्कैव सा यतः ॥ १३ ॥

अन्तर्दाहे हेतुर्द्वेषेद्धेति द्वेषेणेद्धा द्विष्यमाणतयोत्तेजितेत्यर्थः । तद्द्वेषेण ह्यस्यैवंभाव इति भावः । तदुक्तं

'निन्द्यमानमहामन्त्रविद्याचर्यादिकोपजम् ।
पाप्म तं पातयेद्घोरे यातनाधाम्नि सर्वथा ॥'

इति । कश्चात्र दाहार्थ इत्याशङ्क्याह दाहः शङ्कैव सा यत इति । शङ्का हि विकल्पः, स एव च संसारनिमित्तम् । यदुक्तं

'सर्वो विकल्पः संसारः……………………।

इति । तत्रैव चास्य दन्दह्यमानत्वं नाम तिरोभाव इत्येवमुक्तम् ॥ १३ ॥

नन्वत्र चास्य किं प्राक्तनकर्मविस्फूर्जितं निमित्तमुतान्यत्किंचित्याशङ्क्याह

**न चास्य कर्मममनुमा तादृग्येनेत्थमास्त सः ।**
**किं हि तत्कर्म कस्माद्वा पूर्वेणात्र समो विधिः ।। १४ ।।**

तादृक् तिरोधानहेतुः, इत्थमिति प्रबुद्धचेष्टादिद्वेषकारितया । नह्येवंविधं कर्म किंचिदस्ति यत्तिरोधानहेतुतां यायात्, तद्धि जात्यायुर्भोगप्रदम्, नचैतन्मध्यात्तिरोधानं किञ्चिदित्युक्तं किं हि तत्कर्मेति । नचैवंविधः कश्चन कर्माशयोऽप्यस्ति योऽस्य हेतुतां यायादित्याह कस्माद्वेति । एवं च यथा कर्मादिनैरपेक्ष्येण परमेश्वरेच्छयैव अनुग्रहः स्यादिति पूर्वमुक्तं, तथा तिरोधानमपीत्युक्तं पूर्वेणात्र समो विधिरिति । विधिरिति चोद्यप्रतिसमाधानप्रकारः ॥ १४ ॥

अत एवाह

**तस्मात्सा परमेशेच्छा ययायं मोहितस्तथा ।**
**अनन्तकालसंवेद्यदुःखपात्रत्वमीहते ।। १५ ।।**

ननु पारमेश्वरमिच्छामात्रमेव चेदत्र निमित्तं, तत्कुतस्त्यमिदमेषां दुःखवैचित्र्यमित्याशङ्क्याह

**तत्रापि चेच्छावैचित्र्यादिहामुत्रोभयात्मकः ।**
**दुःखस्यापि विभेदोऽस्ति चिरशैघ्र्यचकृतस्तथा ।। १६ ।।**

एतदेव दर्शयति

**कालकामान्धकादीनां पौलस्त्यपुरवासिनाम् ।**
**तथान्येषां तिरोभावस्तावद्दुःखो ह्यमुत्र च ।। १७ ।।**

पुरवासिनस्त्रिपुराः, अन्येषामिति चित्रसेनादीनाम् । चशब्दादिहापि, तेन कालादीनामिहैव दाहाद्यनन्तरमनुग्रहस्य वृत्तत्वात्, पौलस्त्यादीनामुभयत्रापि अनुग्रहासंपत्तेः ॥

न केवलमस्य पारमेश्वरमिच्छामात्रमेव निमित्तं, यावदन्यदपीत्याह

**अन्योऽपि च तिरोभावः समयोल्लङ्घनात्मकः ।**

समयोल्लङ्घनात्मक इति कार्यकारणयोरभेदोपचारात् ॥

किमत्र प्रमाणमित्याशङ्क्याह

**यदुक्तं परमेशेन श्रीमदानन्दगह्वरे ।। १८ ।।**

**समयोल्लङ्घनाद्देवि क्रव्यादत्वं शतं समाः ।**

नचात्र शतं समा एव इति नियमो विवक्षित इत्याह

**तत्रापि मन्दतीव्रादिभेदाद्बहुविधः क्रमः ।। १९ ।।**

एवं तिरोभावस्य स्वरूपमभिधाय, तद्व्यपगममप्यासूत्रयति

**स्वातन्त्र्याच्च महेशस्य तिरोभूतोऽप्यसौ स्वयम् ।**

**परद्वारेण वाभ्येति भूयोऽनुग्रहमप्यलम् ।। २० ।।**

अत्र स्वयं तावदनुग्रहाभिमुख्येनागमनमाह

**भूयोऽनुग्रहतः प्रायश्चित्ताद्याचरणे सति ।**

**अनुसारेण दीक्षादौ कृते स्याच्छिवतामयः ।। २१ ।।**

प्रायश्चित्ताचरणं हि स्वयमेव भवेदिति भावः । अनुसारेणेति शक्तिपातस्य तीव्रमन्दादिरूपतया स्वयोग्यतायाः ॥ २१ ॥

परद्वारेणाप्याह

**तिरोभूतः परेतासुरपि बन्धुसुहृद्गुरून् ।**

**आलम्ब्य शक्तिपातेन दीक्षाद्यैरनुगृह्यते ।। २२ ।।**

अत्रापि प्राग्वद्वैचित्र्यमस्तीत्याह

**तत्रापि कालशीघ्रत्वचिरत्वादिविभेदताम् ।**

**तथैति शक्तिपातोऽसौ येनायाति शिवात्मताम् ।। २३ ।।**

तथेति चिरं शीघ्रेण वा ॥ २३ ॥

प्रागुक्तमेव प्रमेयं संचिनोति

**इत्थं सृष्टिस्थितिध्वंसतिरोभावमनुग्रहः ।**

**इति पञ्चसु कर्तृत्वं शिवत्वं संविदात्मनः ।। २४ ।।**

ननु भवतु संविदः सृष्ट्यादौ कृत्यपञ्चके कर्तृत्वं नाम शिवत्वं, यादृशां पुनरेतदुपदेशेन कोऽर्थ इत्याशङ्क्याह

**पञ्चकृत्यस्वतन्त्रत्वसंपूर्णस्वात्ममानिनः ।**
**योगिनोऽर्चाजपध्यानयोगाः संस्युः सदोदिताः ॥ २५ ॥**

अर्चादीनां हि परतत्त्वानुप्राणित्वं नाम तत्त्वम् । तच्चैवंमानिनो योगिनः सर्वदैवास्तीत्युक्तं तेऽपि सदोदिता इति ॥ २५ ॥

एवं चैतदेव परमुपेयं येन जीवतोऽपि मुक्तिः स्यात्, अतश्च क्षणमात्रावभासिनि कृत्रिमप्राये भोगादावासक्तिर्न कार्येत्याह

**ऐन्द्रजालिकवृत्तान्ते न रज्येत कदाचन ।**
**सादाशिवोऽपि यो भोगो बन्धः सोऽप्युचितात्मनाम् ॥२६॥**

ननु ज्ञानक्रियात्मा शिव इत्यस्मन्मतं, तत्कथमुक्तं कर्तृत्वमेव शिवत्वमिति,—इत्याशङ्क्याह

**ज्ञातृत्वमेव शिवता स्वातन्त्र्यं तदिहोच्यते ।**

नहि ज्ञानक्रिययोः कश्चिद्भेद इति भावः ।

यदुक्तं

'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।'

इति ॥

कुलालादिन्यायेन निर्मातृतारूपं पुनः कर्तृत्वमत्र न विवक्षितं यतस्तन्न मुख्यम् । तद्धि शुद्धस्वातन्त्र्यात्मनः कर्तृत्वस्याधिष्ठेयं तेन विनास्यानुदयात् । तदाह

**कुलालवत्तु कर्तृत्वं न मुख्यं तदधिष्ठितेः ॥ २७ ॥**

ननु तर्हि मादृशामपि कुलालादिवदेव न मुख्यकर्तृत्वमिति कृतमात्मनि शिवत्वाभिमानेन, तथात्वे ह्यस्माकमपीच्छामात्रानुवर्ति जगद्भवेत्, नचैवमित्याशङ्क्याह

**इति ज्ञात्वा ग्रहीतव्या नैव जात्वपि खण्डना ।**
**शिवोऽहं चेन्मदिच्छानुवर्ति किं न जगत्त्विति ॥ २८ ॥**

खण्डनेति पारिमित्यम् ॥ २८ ॥

तदग्रहणमेवोपपादयति

**ममेच्छामनुवर्तन्तामित्यत्राहंविदि स्फुरेत् ।**
**शिवो वा परमेशानो देहादिरथ निर्मितः ।। २९ ।।**
**शिवस्य तावदस्त्येतद्देहस्त्वेष तथा त्वया ।**
**कृतः कान्या देहतास्य तत्किं स्याद्वाच्यतापदम् ।। ३० ।।**

अहंविदीति अहंसंवित्तावित्यर्थः । तत्र स्वतन्त्रः शिव एव यद्यत्र स्फुरेत्, तत्स्थितमेव जगतस्तदिच्छानुवर्तित्वम् । अथ निर्मितो देह्यादिः, कुत एवमस्य भवेत् । स हि जड एव अपहस्तिततपूर्णज्ञानक्रियः सृष्टः, अन्यथा हि अस्य देहत्वमेव न स्यात्, तदेतन्नोपालम्भनीयमित्युक्तं तत्किं स्याद्वाच्यतापदमिति । तस्माच्छिव एवाहमभिज्ञानः कार्यो, न देहादौ येन तत्त्वमेव दार्ढ्यातिशयात्प्ररोहमुपगच्छेत् । इयता च ज्ञानपरिपूर्णताख्यं प्रमेयमुक्तं, तदेव च परमुपादेयं येनोक्तं

'ऐन्द्रजालिकवृत्तान्ते न रज्येत कदाचन ।'

इति ।। ३० ।।

ननु किमत्र प्रमाणमित्याशङ्क्याह

**उक्तं च सिद्धसन्तानश्रीमदूर्मिमहाकुले ।**

ऊर्मिमहाकुले इति ऊर्मिकौले ।।

तदेव पठति

**पवनभ्रमणप्राणविक्षेपादिकृतश्रमाः ।। ३१ ।।**
**कुहकादिषु ये भ्रान्तास्ते भ्रान्ताः परमे पदे ।**

ननु यद्येवं, तत्कथं प्राणविक्षेपाद्यात्मिकाया उत्क्रान्तेः परपदोपायत्वं सर्वत्रोक्तमित्याशङ्क्याह

**सर्वत्र बहुमानेन याप्युत्क्रान्तिर्विमुक्तये ।। ३२ ।।**
**प्रोक्ता सा सारशास्त्रेषु भोगोपायतयोदिता ।**

यद्गीतं

'सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ।।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥' (८।१२)

इति। सारशास्त्रेष्विति प्रधानेषु ऊर्मिकौलादिष्वित्यर्थः। भोगोपायतयेति न मुक्त्युपायतया। अनेन च उत्क्रान्तेरनुपयुक्तत्वमासूत्रितम् ॥

तदेव उपपादयितुं तत्रत्यमेव ग्रन्थं पठति

**यदि सर्वगतो देवो वदोत्क्रम्य क्व यास्यति ॥ ३३ ॥**
**अथासर्वगतस्तर्हि घटतुल्यस्तदा भवेत् ।**
**उत्क्रान्तिविधियोगोऽयमेकदेशेन कथ्यते ॥ ३४ ॥**
**निरंशे शिवतत्त्वे तु कथमुत्क्रान्तिसंगतिः ।**

घटतुल्य इति नियतदेशकालाकारतया सङ्कुचितप्रायत्वात्। उत्क्रान्तिप्रकारश्चायं योग एकदेशेन नियतदेशतया कथ्यते—यदधराधरपदत्यागेन ऊर्ध्वोर्ध्वपदाक्रमणमुत्क्रान्तिरिति। नचैतच्छिवतत्त्वे संगच्छते, यतः सदसदादिविकल्पोज्झितत्वात् तन्निरंशम्। तदुक्तं तत्र

'उत्क्रान्तिर्विद्यते तत्र यत्र स्यान्मानकल्पना ।
अमाने शून्यनिर्भासे तत्रोत्क्रान्तिर्न विद्यते ॥
अस्ति चेद्भगवान्व्यापी कथयोत्क्रमणेन किम् ।
नास्ति चेद्भगवान्व्यापी कथयोत्क्रमणेन किम् ॥
उत्क्रान्तिविधियोगोऽयमेकदेशेन कथ्यते ॥
विभुत्वादात्मनः सोऽपि शिवस्य च न विद्यते ॥
नास्त्यस्ति नास्ति नास्तीति कोटयो न स्पृशन्ति यम् ।
वाचामगोचरो यस्मात्तत्तत्त्वमिह कथ्यते ॥'

इत्याद्युपक्रम्य

'यदि सर्वगतो देवो वदोत्क्रम्य क्व यास्यति ।
अथासर्वगतस्तर्हि घटतुल्यस्तदा भवेत् ॥
तस्मादुत्क्रान्तियोगोऽयं भ्रान्तिरेषा तमोमयो ।'

इति ॥

भोगोपायता चास्याः कथं स्यादित्याशङ्क्याह

**यथा धरादौ वाय्वन्ते भूग्वम्ब्वग्न्युपवासकैः ॥ ३५ ॥**

**आत्मनो योजनं व्योम्नि तद्वदुत्क्रान्तिवर्तना ।**

तेन यथा भृग्वादिभिः क्रमेण धरादौ तत्त्वचतुष्टये भोगस्तथाप्यनया आकाशतत्त्वे इति । कारणगुणप्रक्रमेण हि कार्येण भवितव्यमिति भावः ॥

अतश्च न परतत्त्वावाप्तिकामैरेतदनुष्ठेयमित्याह

**तस्मान्नोत्क्रमयेज्जीवं　　परतत्त्वसमोहया ॥ ३६ ॥**

ननु यद्युत्क्रान्तेर्मुक्त्युपायत्वं नास्ति, तत्कथं

'स्वशरीरं परित्यज्य शाश्वतं पदमृच्छति ।' (१७।२५)

इत्यादि श्रीमालिनीविजयोत्तरे प्रोक्तमित्याशङ्क्याह

**श्रीपूर्वशास्त्रे तूक्तं यदुत्क्रान्तेर्लक्षणं न तत् ।**
**मुक्त्युपायतया किंतु भोगहान्यै तथैषणात् ॥ ३७ ॥**

तथेत्युत्क्रान्त्यात्मना प्रकारेण ॥ ३७ ॥

एतद्धि पारमेश्वरशक्तिपातवशोन्मिषितपरसंविदैकात्म्यभाजां योगिनां बाह्य विषयोपभोगवैमुख्यात् देहत्याग एव उपायमात्रमिति । तदाह

**जपध्यानादिसंसिद्धः स्वातन्त्र्याच्छक्तिपाततः ।**
**भोगं प्रति विरक्तश्चेदित्थं देहं त्यजेदिति ॥ ३८ ॥**

नचापूर्वतयैवात्रैतदुपदिष्टमित्याह

**स्वच्छन्दमृत्योरपि यद् भीष्मादेः श्रूयते किल ।**
**भोगवैरस्यसंप्राप्तौ　　जीवितान्तोपसमर्पणम् ॥ ३९ ॥**

ननु जीवितान्तस्य भोगवैमुख्यं नाम स्वारसिकं निमित्तं, नहि त्यक्तरसास्वादो जन्तुः कथञ्चिदपि जीवेत् तत्किं तदुपायोपदेशेन, न हि बुभुक्षितोऽश्नीयादित्यादौ शास्त्रमपेक्षणीय मित्याशङ्क्याह

**योगमन्त्रामृतद्रव्यवराद्यैः　　सिद्धिभाक्तनुः ।**
**हातुं नह्यन्यथा शक्या विनोक्तक्रमयोगतः ॥ ४० ॥**

सिद्धिभाक् स्थैर्यं प्राप्तेत्यर्थः ॥ ४० ॥

न चैतत्स्वमनीषिकयैवोक्तमित्याह

**उक्तं च मालिनीतन्त्रे परमेशेन तादृशम् ।**
**सर्वमप्यथवा भोगं मन्यमानो विरूपकम् ।। ४१ ।।**
**इत्यादि वदता सर्वैरलक्ष्यान्तःसतत्त्वकम् ।**

परमेशेन इत्यादि वदता तादृशमुक्तमिति संबन्धः। विरूपकमिति परसंविदावेशचमत्कारतारतम्यात्, नतु त्यक्तरसास्वादत्वात्। सर्वैरिति उत्तानप्रायार्थवेदिभिः। इदमत्रान्तःसतत्त्वं—यदस्य स्वात्मनि शिवाहंभावाभिमानेनैव मुक्तिः, देहत्यागस्त्वनयेति। यदभिप्रायेणैवात्र

'....................शाश्वतं पदमृच्छति।' (१७।२५)

इति। तथा

'....................दीक्षोक्तं फलमश्नुते।'

इत्याद्युक्तम् ॥

तस्मात्सृष्ट्यादिपञ्चविधकृत्यकारित्वाभिमान एव स्वात्मनि परं मुक्तावुपाय इत्याह

**एवं सृष्ट्यादिकर्तव्यस्वस्वातन्त्र्योपदेशनम् ।। ४२ ।।**
**यत्सैव मुख्यदीक्षा स्याच्छिष्यस्य शिवदायिनी ।**

नचैतदप्रमाणकमित्याह

**उक्तं श्रीनिशिचारे च भैरवीयेण तेजसा ।। ४३ ।।**
**व्याप्तं विश्वं प्रपश्यन्ति विकल्पोज्झितचेतसः ।**
**विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।। ४४ ।।**
**बाह्यदीक्षादियोगेन चर्यासमयकल्पनैः ।**
**अविकल्पस्तथाद्यैव जीवन्मुक्तो न संशयः ।। ४५ ।।**

तेजसेति पूर्णज्ञानक्रियात्मनेति, अत एवोक्तं विकल्पोज्झितचेतस इति संविदद्वैतमात्रनिष्ठा इत्यर्थः। विकल्पयुक्तचित्त इति इदानीमेव संविदद्वैतासिद्धेः। अद्यैवेति सत्यपि देह इति यावत्। तदुक्तं तत्र

'तेजसास्य शिवस्यैव व्याप्तं सर्वं चराचरम् ।
पश्यन्ति मुनयः सिद्धा वीरसंज्ञाश्च देवताः ॥

विकल्पोज्झितचित्तास्तु पश्यन्ति भुवि मानवाः ।
विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ॥
विकल्पक्षीणचित्तस्तु आत्मानं शिवमव्ययम् ।
पश्यते भावशुद्धचा यो जीवन्मुक्तो न संशयः ॥'

इति । एवं निर्विकल्पवृत्तीनां जीवतामेव मुक्तिरितरेषां तु देहपातानन्तरमिति सिद्धम् ॥

ननु जीवत एव यन्न सिद्धं, तन्मृतस्य भविष्यति,—इत्यत्र किं प्रमाणमित्याशङ्क्याह

**संसारजीर्णतरुमूलकलापकल्प-**
**संकल्पसान्तरतया परमार्थवह्नेः ।**
**स्युर्विस्फुलिङ्गकणिका अपि चेत्तदन्ते**
**देदीप्यते विमलबोधहुताशराशिः ॥ ४६ ॥**

संसार एव 'सर्वो ममायं विभवः' इत्यादिशुद्धविकल्पघुणग्रस्तत्वाज्जीर्णतरुः, तस्यावष्टम्भकतया मूलकलापप्राया ये भेदानुप्राणकत्वादशुद्धाः संकल्पास्तैर्व्यवहितत्वेन साक्षादनभिव्यक्तत्वात् पारमार्थिकस्य बोधहुताशराशेर्विस्फुलिङ्गकणिकाप्राया अपि यदि समाधानादिदशासु त्वादावेशलेशा भवेयुः, तदवश्यमर्थाद्देहस्यान्ते पुनः पुनरभ्यासफूत्कारोत्तेजितः परमार्थवह्निर्देदीप्यते देहप्रमातृतादिनिर्वापणपूर्वं परप्रमातृत्वमेवात्यर्थं दीप्ततामियादित्यर्थः ॥ ४६ ॥

एतदेव प्रथमार्धेनोपसंहरति

**इत्थं दीक्षोपक्रमोऽयं दर्शितः शास्त्रसंमतः ।**

शास्त्रसंमत इति न तु स्वोपज्ञ एवेति शिवम् ।

अहिततिरोहितिविहतिप्रोन्मोषितस्वात्मपूर्णविज्ञानः ।
अह्नायाह्निकमेतच्चतुर्दशं जयरथः समाचख्यौ ॥

**इति श्रीतन्त्रालोकविवेके दीक्षोपक्रमप्रकाशनं नाम चतुर्दशमाह्निकम् ॥१४॥**